'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' ( य० वा० सं० १८।४० ) इत्यपि निगमो भवति । सोऽपि गौरुच्यते । 'अत्राह गोरमन्वत' ( ऋ० सं० १। ८४।१५ ) इति । तदुपरिष्टाद्व्याख्यास्यामः ( निरु० ४।२५ ) । सर्वेऽपि रश्मयो गाव उच्यन्ते ( महा० ६ ॥ गु० २ अथवा ९ ) ।

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ( ऋ० सं० १। १५४।६ ) ॥ तानि वां वास्तूनि कामयामहे गमनाय । यत्र गावो भूरिशृङ्गा बहुशृङ्गाः । भूरि इति बहुनो नामधेयम् । प्रभवतीति सतः । शृङ्गं श्रयतेर्वा । शृणातेर्वा । शम्नातेर्वा । शरणायोद्गतमिति वा । शिरसो निर्गतमिति वा । अयासः अयनाः । तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि । पादः पद्यतेः । तन्निधानात्पदम् । पशुपादप्रकृतिः प्रभागपादः । प्रभागपादसामान्यादितराणि पदानि । एवमन्येषामपि सत्त्वानां संदेहाः विद्यन्ते । तानि चेत्समानकर्माणि समाननिर्वचनानि । नानाकर्माणि चेन्नानानिर्वचनानि । यथार्थं निर्वक्तव्यानि । इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि । तत्र निर्ऋतिर्निरमणात् । ऋच्छतेः कृच्छ्रापत्तिरितरा । सा पृथिव्या संदिह्यते । तयोर्विभागः । तस्या एषा भवति ( महा० ७ ॥ गु० ३ अथवा १० ) ।

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् । स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ( ऋ० सं० १।१६४।३२ ) ॥ बहुप्रजाः कृच्छ्रमापद्यते इति परिव्राजकाः । वर्षकर्मेति नैरुक्ताः । य ईं चकारेति । करोतिकिरती संदिग्धौ वर्षकर्मणा । न सोऽस्य वेद मध्यमः । स एवास्य वेद मध्यमो यो ददर्शादित्योपहितम् । स मातुर्योनौ । मातान्तरिक्षम् । निर्मीयन्तेऽस्मिन् भूतानि । योनिरन्तरिक्षम् । महानवयवः परिवीतो वायुना । अयमपीतरो योनिरेतस्मादेव । परियुतो भवति । बहुप्रजा भूमिमापद्यते वर्षकर्मणा । शाकपूणिः संकल्पयांचक्रे सर्वा देवता जानामीति ।

१ 'सुषुम्नः' ओ. २ 'भूरिशृङ्गाः' आ. ३ 'बहुशृङ्गाः' ई. ४ 'सतः' ई. ५ 'शम्ना० द्गतमिति वा' ई. ६ 'अत्राह' इ. ७ 'सो अस्य' अ. ८ 'महानवयवः' ई. ९ 'परियुतो' इ. १० 'आपद्यते वर्षकर्मणा' ई. ११ 'जानानीति' एकस्मिन् पुस्तके.

तस्मै देवतोभयलिङ्गा प्रादुर्बभूव । तां न जज्ञे । तां पप्रच्छ । विविदिषाणि त्वेति । सास्मा एतामृचमादिदेश । एषा मद्देवतेति ( महा० ८ ॥ गु० ४ अथवा ११ ) ।

अयं स शिङ्क्ते येन गौरभीवृता[1] मिमाति मायुं ध्वसनावधि श्रिता । सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ( ऋ०सं० १।१६४।२९ ) ॥ अयं स शब्दायते येन गौरभिप्रवृत्ता मिमाति मायुम् । शब्दं करोति[2] । मायुमिवादित्यमिति वा । वागेषा माध्यमिका । ध्वंसने मेघे अधिश्रिता[3] । सा चित्तिभिः कर्मभिः[4] नीचैर्निकरोति मर्त्यम् । विद्युद्भवन्ती प्रत्यूहते वव्रिम् । वव्रिः इति रूपनाम । वृणोतीति सतः[5] । वर्षेण प्रच्छाद्य पृथिवीं पुनरादत्ते (महा० ९ ॥ गु० ५ अथवा १२ । इति द्वितीयाध्यायस्य द्वितीयः पादः)।

हिरण्यनामान्युत्तराणि पञ्चदश ( निघ० १।२ )। हिरण्यं ( निघ० १।२।५ ) कस्मात् । ह्रियते आयम्यमानमिति[6] वा । ह्रियते जनाज्जनमिति वा । हितरमणं भवतीति वा । हृदयरमणं भवतीति वा[7] । हर्यतेर्वा स्यात्प्रेप्साकर्मणः । अन्तरिक्षनामान्युत्तराणि षोळश[8] ( निघ० १।३ )। अन्तरिक्षं कस्मात् । अन्तरा क्षान्तं भवति । अन्तरा इमे इति वा । शरीरेष्वन्तरक्षयमिति[9] वा । तत्र समुद्रः ( निघ० १।३।१५ ) इत्येतत्पार्थिवेन समुद्रेण संदिह्यते । समुद्रः कस्मात् । समुद्द्रवन्त्यस्मादापः । समभिद्रवन्त्येनमापः । संमोदन्तेऽस्मिन् भूतानि । समुदको भवति । समुनत्तीति[10] वा । तयोर्विभागः । तत्रेतिहासमाचक्षते । देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शंतनुः कनीयानभिषेचयांचक्रे । देवापिस्तपः प्रतिपेदे । ततः शंतनोः राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणाः । अधर्मस्त्वयाचरितः[11] । ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् । तस्मात्ते देवो न वर्षतीति । स शंतनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः । पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम्[12] । तस्यैषा भवति ( महा० १० ॥ गु० १ अथवा १३ ) ।

---

१ 'अभीवृता' इ. २ '°करोतीत्यर्थः' इ. ३ 'अध्याश्रिता' इ. ४ 'कर्मभिः नीचैः' आ. ५ 'वृणोतीति सतः' ई. ६ 'आयाम्य°' एकस्मिन्वृत्तिपुस्तके. ७ 'हृद्यरमणं भवतीति वा' ई. ८ 'षोडश' अथवा 'षोलश' अ. ९ '°न्तरिक्ष०' अ. १० 'समुन्नत्ती°' अ. ११ 'अधर्मस्त्वया चरितः' ई. १२ '°कामस्य सूक्तं' इ.

आर्ष्टिषेणो होत्रमृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान् । स उत्तरस्मादधरं समुद्रमपो दिव्या असृजद्वर्ष्या अभि (ऋ०सं०१०।९८।५)। आर्ष्टिषेणः ऋष्टिषेणस्य पुत्रः । इषितसेनस्येति वा । सेना सेश्वरा । समानगतिर्वा । पुत्रः पुरु त्रायते । निपरणाद्वा । पुत् नरकम् । ततस्त्रायते इति वा । होत्रमृषिर्निषीदन् । ऋषिर्दर्शनात् । स्तोमान् ददर्शेत्यौपमन्यवः । 'तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्ष[1]त्तदृषीणामृषित्वमिति विज्ञायते (तै० आ० २।९)। देवापिः देवानामाप्त्या । स्तुत्या च । प्रदानेन च । देवसुमतिं देवानां कल्याणीं मतिम् । चिकित्वान् चेतनावान्[2] । स उत्तरस्मादधरं समुद्रम् । उत्तरः उद्धततरो भवति । अधरः अधोऽरः । अधः न धावति । इत्यूर्ध्वगतिः प्रतिषिद्धा । तस्योत्तरा भूयसे निर्वचनाय ( महा०११ ॥ गु० २।१४ ) ।

यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् । देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत् ( ऋ० सं० १०।९८।७ ) ॥ शंतनुः । शं तनोऽस्त्विति वा । शमस्मै तन्वा अस्त्विति वा । पुरोहितः। पुर एनं दधति । होत्राय वृतः । कृपायमाणः । अन्वध्यायत् । देवश्रुतम् । देवा एनं शृण्वन्ति । वृष्टिवनिं वृष्टियाचिनम् । रराणः । रातिः अभ्यस्तः । बृहस्पतिर्ब्रह्मासीत् । सोऽस्मै वाचमयच्छत् । बृहदुपव्याख्यातम् (निरु०१।७) ( महा० १२ ॥ गु० ३ अथवा १५ । इति द्वितीयाध्यायस्य तृतीयः पादः ) ।

साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च ( निघ० १।४ )। यानि त्वस्य प्राधान्येनोपरिष्टात्तानि व्याख्यास्यामः ( निरु० १२।१२-१८ )। आदित्यः कस्मात् । आदत्ते रसान् । आदत्ते भासं ज्योतिषाम् । आदीप्तो भासेति वा । अदितेः पुत्रः इति[3] वा । अल्पप्रयोगं त्वस्यैतद् आर्चाभ्याम्नाये । सूक्तभाक् । 'सूर्यमादितेयम्' (ऋ०सं० १०।८८।११)। एवम्[4]न्यासामपि देवतानामादित्यप्रवादाः[5] स्तुतयो भवन्ति । तद्यथैतत् । मित्रस्य वरुणस्यार्यम्णो दक्षस्य भगस्यांशस्येति । अथापि मित्रावरुणयोः । 'आदित्या दानुनस्पती' ( ऋ० सं० २।४१।६ )। दानपती । अथापि मित्रस्यैकस्य । 'प्र स मित्र मर्तो अस्तु

---

१ '°नर्षत्त ऋषयोऽभवन् । तद°' । ओ. २ 'चेतनावान्' ई. ३ 'इति' ई. ४ 'एवं' आ.। 'अदितेः पुत्रम् । एवं०' ओ. ५ 'आदित्याभिधानप्रवादाः' इ.

प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन' (ऋ०सं० १।५९।२) इत्यपि निगमो भवति। अथापि वरुणस्यैकस्य। 'अथा वयमादित्य व्रते तव' (ऋ० सं० १।२४।१५)। व्रतमिति कर्मनाम। निवृत्तिकर्म वारयतीति सतः। इदमपीतरद् व्रतमेतस्मादेव। वृणोतीति सतः। अन्नमपि व्रतमुच्यते। यदावृणोति शरीरम् (मह्रा० १३ ॥ गु० १ अथवा १६)।

स्वर् आदित्यो भवति। सु अरणः। सु ईरणः। स्वृतो रसान्। स्वृतो भासं ज्योतिषाम्। स्वृतो भासेति वा। एतेन द्यौर्व्याख्याता (गु०२अथवा१७)। पृश्निः आदित्यो भवति। प्राश्नुत एनं वर्णः इति नैरुक्ताः। संस्प्रष्टा रसान्। संस्प्रष्टा भासं ज्योतिषाम्। संस्पृष्टो भासेति वा। अथ द्यौः। संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च (गु० ३ अथवा १८)। नाकः आदित्यो भवति। नेता भासाम्। ज्योतिषां प्रणयः। अथ द्यौः। कम् इति सुखनाम। तत् प्रतिषिद्धं प्रतिषिध्येत। न वा अमुं लोकं जग्मुषे किंचनाकम् (काठकसं० २१।२)। न वा अमुं लोकं गतवते किंचन असुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति (गु०४ अथवा १९)। गौः आदित्यो भवति। गमयति रसान्। गच्छत्यन्तरिक्षे। अथ द्यौः। यत् पृथिव्या अधि दूरंगता भवति। यच्चास्यां ज्योतींषि गच्छन्ति (गु० ५ अथवा २०)। विष्टप् आदित्यो भवति। आविष्टो रसान्। आविष्टो भासं ज्योतिषाम्। आविष्टो भासेति वा। अथ द्यौः। आविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च (गु० ६ अथवा २१)। नभः आदित्यो भवति। नेता भासाम्। ज्योतिषां प्रणयः। अपि वा। भनः एव स्याद्विपरीतः। न न भातीति वा। एतेन द्यौर्व्याख्याता (मह्रा० १४ ॥ गु० २ अथवा ७ अथवा २२। इति द्वितीयाध्यायस्य चतुर्थः पादः)।

रश्मिनामान्युत्तराणि पञ्चदश (निघ०१।५)। रश्मिः यमनात्। तेषामादितः साधारणानि पञ्चाश्वरश्मिभिः। दिङ्नामान्युत्तराण्यष्टौ (निघ० १।६)। दिशः कस्मात्। दिशतेः। आसदनात्। अपि वा। अभ्यशनात्। तत्र काष्ठाः (निघ० १।६।५) इत्येतदनेकस्यापि सत्त्वस्य नाम भवति। काष्ठाः दिशो भवन्ति।

१ 'वृणोतीति सतः' इ. २ 'निवृत्तिकर्म वारयतीति सतः' इ. ३ 'सद' इ. ४ 'पुण्यकृद्भिश्च' ई. ५ "नेता रसानाम्। नेता' ओ. ६ 'प्रतिषिध्यते' इ. ७ 'जग्मुषे' अ. ८ 'नेता रसानाम् नेता' ओ. ९ 'प्रभयः' अ. १० २ 'नाम' आ.

क्रान्त्वा स्थिता भवन्ति । काष्ठाः उपदिशो भवन्ति । इतरेतरं क्रान्त्वा स्थिता भवन्ति । आदित्योऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति । आज्यन्तोऽपि काष्ठोच्यते । क्रान्त्वा स्थितो भवति । आपोऽपि काष्ठा उच्यन्ते । क्रान्त्वा स्थिता भवन्ति । इति स्थावराणाम् ( नद्या० १५ ॥ गु० १ अथवा २३ ) ।

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् । वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः (ऋ० सं० १।३२।१०)॥ अतिष्ठन्तीनामनिविशमानानाम् इत्यस्थावराणाम्[1] । काष्ठानां मध्ये निहितं शरीरम् । मेघः शरीरम्[2] । शरीरं शृणातेः । शम्नातेर्वा । वृत्रस्य । निण्यं निर्णामम् । विचरन्ति विजानन्ति[3] आप इति । दीर्घं द्राघतेः । तमः तनोतेः ।[4] आशयत् आशेतेः । इन्द्रशत्रुः । इन्द्रोऽस्य शमयिता वा । शातयिता वा । तस्मात्[5] इन्द्रशत्रुः । तत्को वृत्रः । मेघः इति नैरुक्ताः[6] । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति[7] । अहिवत्तु खलु मन्त्रवर्णा ब्राह्मणवादाश्च । विवृद्ध्या शरीरस्य स्रोतांसि निवारयांचकार । तस्मिन् हते प्रसस्यन्दिरे[8] आपः । तदभिवादिनी एषा ऋग्भवति (नद्या० १६ ॥ गु० २ अथवा २४ )

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः । अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ( ऋ० सं० १।३२।११ ) ॥ दासपत्नीः दासाधिपत्न्यः । दासो दस्यतेः । उपदासयति कर्माणि । अहिगोपा अतिष्ठन् । अहिना गुप्ताः । अहिः अयनात् । एति अन्तरिक्षे । अयमपीतरोऽहिः एतस्मादेव । निर्ह्रसितोपसर्गः आहन्तीति[9] । निरुद्धा आपः पणिनेव गावः । पणिः वणिग् भवति । पणिः पणनात् । वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति । बिभर्तेः । वृत्रं जघ्निवान् अपववार तत् । वृत्रो वृणोतेर्वा । वर्ततेर्वा । वर्धतेर्वा । यदवृणोत्तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्[10]

---

१ 'इत्यस्थावराणां' ई. २ 'मेघः शरीरं' ई. ३ 'विजानन्तीति' इ. ४ 'श्रुति' ई. ५ 'तस्माद् इन्द्रशत्रुः' ई. ६ 'नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपां°' ओ. ७ 'भवन्ति । मायेन्द्र ते यानि युद्धान्याहुः ( ऋ० सं० १०।५४।२ ) । ७ अहि° इ. ८ 'प्रसस्यन्दिरे' अ. ९ 'आहन्तीति वा' इ. १० 'यदवर्तत' इत्यपि पाठो दुर्गवृत्तौ.

वृत्रस्य वृत्रत्वमिति विज्ञायते (महा० १७॥गु० ३ अथवा२५। इति द्वितीयाध्यायस्य पञ्चमः पादः )।

रात्रिनामान्युत्तराणि त्रयोविंशतिः ( निघ० १।७ )। रात्रिः कस्मात्। प्ररमयति भूतानि नक्तंचारीणि। उपरमयतीतराणि ध्रुवीकरोति। रातेर्वा स्यात् दानकर्मणः। प्रदीयन्तेऽस्यामवश्यायाः। उषोनामान्युत्तराणि षोळश ( निघ० १।८ )। उषाः कस्मात्। उच्छतीति सत्याः। रात्रेरपरः कालः। तस्या एषा भवति (महा० १८॥ गु० १ अथवा २६ )।

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ( ऋ० सं० १।११३।१ )॥ इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत्। चित्रम्। प्रकेतनं प्रज्ञाततमम्। अजनिष्ट। विभूततमम्। यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्य। एवं रात्र्युषसे योनिमरिचत् स्थानम्। स्त्रीयोनिः अभियुतः एनां गर्भः। तस्या एषापरा भवति (महा० १९ ॥ गु० २अथवा २७ )।

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः। समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ( ऋ० सं० १।११३।२)॥ रुशद्वत्सा सूर्यवत्सा। रुशत् इति वर्णनाम। रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह। साहचर्यात्। रसहरणाद्वा। रुशती श्वेत्यागात्। श्वेत्या श्वेततेः। अरिचत् कृष्णा सदनानि अस्याः। कृष्णवर्णा रात्रिः। कृष्णं कृष्यतेः। निकृष्टो वर्णः। अथ एने संस्तौति। समानबन्धू समानबन्धने। अमृते अमरणधर्माणौ। अनूची अनूच्यौ इतरेतरमभिप्रेत्य। द्यावा वर्णं चरतः। ते एव द्यावौ। द्योतनात्। अपि वा। द्यावा चरतः। तया सह चरत इति स्यात्। आमिनाने अन्योन्यस्याध्यात्मं कुर्वाणे। अहर्नामान्युत्तराणि द्वादश (निघ०१।९)। अहः कस्मात्। उपाहरन्ति अस्मिन् कर्माणि। तस्यैष निपातो भवति वैश्वानरीयायामृचि ( महा० २० ॥ गु० ३ अथवा २८ )।

---

१ 'षोलश' अथवा 'षोडश' अ. २ 'आगात्' इ. ३ 'आरैक्' इ. ४ 'स्त्रीयोनिरेतस्मादेव। अभि०' इ. ५ 'रोचतेर्ज्वलतिकर्मणः' ई.। ६ 'कृष्णं कृष्यतेः। निकृष्टो वर्णः' ई. ७ 'एते' इ. ८ 'अनूच्यौ' आ। ई. ९ 'द्यावा चरतः' ई. १० 'सह' आ. ११ 'आमिनाने' आमिन्वाने अन्यो०' ओ.

अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः । वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ( ऋ० सं० ६।९।१ ) ॥ अहश्च कृष्णं रात्रिः । शुक्लं चाहर् अर्जुनम् । विवर्तेते रजसी । वेद्याभिः वेदितव्याभिः प्रवृत्तिभिः । वैश्वानरो जायमान इव उद्यन्नादित्यः । सर्वेषां ज्योतिषां राजा । अवाहन् अग्निः ज्योतिषा तमांसि । मेघनामान्युत्तराणि त्रिंशत् (निघ० १।१० )। मेघः ( निघ० १।१०।२४ ) कस्मात् । मेहतीति सतः । आ उपर उपल (निघ०१।१०।१८-१९) इत्येताभ्यां साधारणानि पर्वतनामभिः । उपर उपलो मेघो भवति । उपरमन्तेऽस्मिन्नभ्राणि । उपरता आप इति वा । तेषामेषा भवति ( महा० २१ ॥ गु० ४ अथवा २९ ) ।

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् । त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् (ऋ०सं०१०।२७।२३) ॥ देवानां निर्माणे प्रथमा अतिष्ठन् माध्यमिका देवगणाः । प्रथम इति मुख्यनाम । प्रतमो भवति । विकर्तनेन मेघानामुदकं जायते । त्रयस्तपन्ति पृथिवीमनूपाः । पर्जन्यो वायुरादित्यः शीतोष्णवर्षैरोषधीः पाचयन्ति । अनूपाः । अनुवपन्ति लोकान् स्वेन स्वेन कर्मणा । अयमपीतरोऽनूपः एतस्मादेव । अनूप्यते उदकेन । अपि वा । अन्वाप् इति स्यात् । यथा प्राक् इति । तस्य अनूपः इति स्यात् । यथा प्राचीनम् इति । द्वा बृबूकं वहतः पुरीषम् । वाय्वादित्यौ उदकम् । बृबूकम् इत्युदकनाम । ब्रवीतेर्वा शब्दकर्मणः । भ्रंशतेर्वा पुरीषं पृणातेः पूरयतेर्वा (महा० २२ ॥ गु० ५ अथवा ३० । इति द्वितीयाध्यायस्य पष्ठः पादः )

वाङ्नामान्युत्तराणि सप्तपञ्चाशत् (निघ० १।११ )। वाक् कस्मात् वचेः । तत्र सरस्वती (निघ० १।११।२२) इत्येतस्य नदीवत् ऽ०सं०४।४०। भवन्ति । तद्यद्देवतावदुपरिष्टात्तद् व्याख्यास्यामः ( छितऽध्वानम् । ग्रीवायां तन्नदीवत् ( महा० २३ ॥ गु० १ अथवा ३१ ) कक्ष आसनीति व्याख्या-

इयं शुष्मेभिर्बिसखा इवारुजत्सानु तत्वमित्यत् । तनोतेः पूर्वया । पन्थाः पततेर्वा । पद्यतेर्वा ।

---

१ 'उग ... राजा
... भवादित्यः' इ. २ ... व्याख्यातं' ई. ४ 'कल्याणपाणिः' ई. ५ 'वृणो-

पन्यतेर्वा । अङ्कः अञ्चतेः । आपनीफणत् इति फणतेः चर्करीतवृत्तम् । दशोत्तराणि ( निघ० १।१५ ) आदिष्टोपयोजनानीत्याचक्षते साहचर्यज्ञानाय ज्वलतिकर्माणः उत्तरे धातवः एकादश (निघ० १।१६)। तावन्त्येवोत्तराणि(निघ० १।१७) ज्वलतो नामधेयानि नामधेयानि (महा० २८ ॥ गु० ६ अथवा ३६)।

इति निरुक्ते पूर्वषट्के द्वितीयोऽध्यायः ॥

---

# तृतीयोऽध्यायः ।

कर्मनामान्युत्तराणि षड्विंशतिः ( निघ० २।१ )। कर्म कस्मात् । क्रियते इति सतः । अपत्यनामान्युत्तराणि पञ्चदश ( निघ० २।२) । अपत्यं ( निघ० २।२।१० ) कस्मात् । अपततं भवति । नानेन पततीति वा । तद्यथा जनयितुः प्रजा एवमर्थीये ऋचौ उदाहरिष्यामः (१) ।

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम । न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः (ऋ० सं० ७।४।७ )॥ परिहर्तव्यं हि नोपसर्तव्यम् । अरणस्य रेक्णः । अरणः अपार्णो भवति । रेक्णः इति धननाम । रिच्यते प्रयतः । नित्यस्य रायः पतयः स्याम । पित्र्यस्येव धनस्य । न शेषो अग्ने अन्यजातमस्ति । शेषः इत्यपत्यनाम । शिष्यते प्रयतः। अचेतयमानस्य तत् प्रमत्तस्य भवति । मा नः पथो विदूदुषः इति । तस्योत्तरा भूयसे निर्वचनाय (२) ।

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ । अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः (ऋ० सं० ७।४।८)। न हि ग्रहीतव्योऽरणः सुसुखतमोऽपि अन्योदर्यः । मनसापि न मन्तव्यो ममायम् इति । अथ स ओकः पुनरेव तदेति यतः आगतो भवति । ओकः इति निवासनामोच्यते । ऐतु नो वाजी वेजनवान् । अभिषहमाणः सपत्नान् । नवजातः । स एव पुत्रः इति । अथैतां दुहितृदायाद्ये उदाहरन्ति । पुत्रदायाद्ये इत्येके (३) ।

शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् । पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे (ऋ०सं० ३।३१।१ )॥

---

१ 'पतन्तीति' इ. २ 'हि नोपसर्तव्यं' ई. ३ 'भवति' ई. ४ 'पालेतु' अ. ५ 'सुसुखतमो' इ. ६ '°ममायं पुत्र इति' ओ. ७ 'पुनरेव तत्' ई. ८ 'यतः आगतो भवति' ई.

प्रशास्ति वोढा संतानकर्मणे दुहितुः पुत्रभावम् । दुहिता दुर्हिता । दूरे हिता । दोग्धेर्वा । नसारसुपागमद्दौहित्रं पौत्रमिति । विद्वान् प्रजननयज्ञस्य । रेतसो वा । अङ्गादङ्गात्संभूतस्य हृदयादधिजातस्य मातरि प्रत्यृतस्य विधानं पूजयन् । अविशेषेण मिथुनाः पुत्राः दायादाः इति । तदेतदृक्श्लोकाभ्यामभ्युक्तम् ( गु० ४ ) अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ( कौषी० आ० ४।११) इति ॥ अविशेषेण पुत्राणां दायो भवति धर्मतः । मिथुनानां विसर्गादौ मनुः स्वायंभुवोऽब्रवीत् ॥ न दुहितरः इत्येके । 'तस्मात्पुमान् दायादोऽदायादा स्त्री' (मैत्रा०सं० ४।६।४) इति विज्ञायते । 'तस्मात्स्त्रियं जातां परास्यन्ति न पुमांसम्' (मैत्रा०सं०४।६।४ ) इति च । स्त्रीणां दानविक्रयातिसर्गाः विद्यन्ते न पुंसः । पुंसोऽपीत्येके । शौनःशेपे दर्शनात् । अभ्रातृमतीवादः इत्यपरम् । 'अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः' । अभ्रातृकाः इव योषाः तिष्ठन्ति संतानकर्मणे पिण्डदानाय हतवर्त्मानः इत्यभ्रातृकायाः अनिर्वाहः औपमिकः । तस्योत्तरा भूयसे निर्वचनाय ( महा०४॥ गु० ५ ।)

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् । जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः (ऋ०सं० १।१२४।७)॥ अभ्रातृकेव पुंसः पितॄन् एत्यभिमुखी सन्तानकर्मणे पिण्डदानाय । न पतिम् । गर्तारोहिणीव धनलाभाय दाक्षिणाजी । गर्तः सभास्थाणुः । गृणातेः । सत्यसंगरो भवति । तं तत्र यापुत्रा यापतिका सारोहति । तां तत्राक्षैराघ्नन्ति । सा रिक्थं लभते । श्मशानसंचयोऽपि गर्तः उच्यते । गुरतेः । अपगूर्णो भवति । श्मशानं श्मशयनम् । श्म शरीरम् । शरीरं शृणातेः । शम्नातेर्वा । श्मश्रु लोम । श्मनि श्रितं भवति । लोम लुनातेर्वा । लीयतेर्वा । 'नोपरस्याविष्कुर्यात् । यदुपरस्याविष्कुर्याद्गर्तेष्ठाः स्यात्प्रमायुको यजमानः' इत्यपि निगमो भवति । रथोऽपि गर्तः उच्यते । गृणातेः स्तुतिकर्मणः । स्तुततमं यानम् । 'आ रोहथो वरुण

---

१ 'वोल्हा' अ. २ 'अमूर्या यन्ति जामयः सर्वा लोहितवाससः । अभ्रातर०' ओ. ३ 'दाक्षिणायाजी' अ. । 'दाक्षिणाजा' सायणगृहीतपाठः । 'दाक्षिणात्या' इ. ४ 'तां तत्राक्षेराघ्नन्ति' ई. ५ 'अक्षेण' अ. ६ 'अपगणों भवति' ई. ७ 'शृतं' अ. ८ 'आविःकुर्यात्' ओ.

मित्र गर्तम्' (ऋ० सं० ५।६२।८) इत्यपि निगमो भवति। जायेव पत्ये कामयमाना सुवासाः ऋतुकालेषु। उषाः हसनेव दन्तान् विवृणुते रूपाणि। इति चतस्रः उपमाः। 'नाभ्रात्रीमुपयच्छेत्। तोकं ह्यस्य तद्भवति' इत्यभ्रातृकायाः उपयमनप्रतिषेधः प्रत्यक्षः पितुश्च पुत्रभावः। पिता यत्र दुहितुः अप्रत्तायाः रेतःसेकं प्रार्जयति संदधात्यात्मानं संगमेन मनसेति। अथैतां जाम्याः रिक्थप्रतिषेधे उदाहरन्ति। ज्येष्ठं पुत्रिकायाः इत्येके (महा० ५॥ गु० ६)।

न जामये तान्वो रिक्थमारैक्चकार गर्भं सनितुर्निधानम्। यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् (३।३१।२)।

न जामये भगिन्यै। जामिः। अन्येऽस्यां जनयन्ति जाम् अपत्यम्। जमतेर्वा स्याद्गतिकर्मणः। निर्गमनप्राया भवति। तान्वः आत्मजः पुत्रः। रिक्थं प्रारिचत् प्रादात्। चकारैनां गर्भनिधानीं सनितुः हस्तग्राहस्य। यदिह मातरोऽजनयन्त वह्निं पुत्रम्। अवह्निं च स्त्रियम्। अन्यतरः संतानकर्ता भवति पुमान् दायादः। अन्यतरोऽर्धयित्वा जामिः प्रदीयते परस्मै (महा० ६॥ गु० ७ इति तृतीयाध्यायस्य प्रथमः पादः)।

मनुष्यनामान्युत्तराणि पञ्चविंशतिः (निघ० २।३)। मनुष्याः कस्मात्। मत्वा कर्माणि सीव्यन्ति। मनस्यमानेन सृष्टाः। मनस्यतिः पुनर्मनस्वीभावे। मनोरपत्यम्। मनुषो वा। तत्र पञ्चजनाः (निघ० २।३।२३) इत्येतस्य निगमाः भवन्ति (महा० ७॥ गु० १ अथवा ८)।

तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम। ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् (ऋ० सं० १०।५३।४)॥

तदद्य वाचः परमं मंसीय येनासुरानभिभवेम देवाः। असुराः असुरताः स्थानेषु। अस्ताः स्थानेभ्यः इति वा। अपि वा। असुः इति प्राणनाम। अस्तः शरीरे भवति। तेन तद्वन्तः। 'सोर्देवानसृजत तत्सुराणां सुरत्वम्। असोरसुरानसृजत तदसुराणामसुरत्वम्' इति विज्ञायते। ऊर्जाद उत यज्ञियासः। अन्नादाश्च

---

१ 'कामयमाना' ई. २ '°द्गमनः प्र°' अ. ३ 'इति' ई. ४ 'जामिः० निर्गमनप्राया भवति' ई. ५ 'जनयन्त्यजनैनमपत्यम्' अ. ६ 'निर्गमनः प्रा०' अ. ७ 'पुत्रः' ई. ८ 'प्रारिचत्' ई. ९ 'करोति गर्भनिधानं' इ. १० 'यदीमा०' अ. ११ 'जनयन्ति' इ. १२ 'ज्ञात' ए.

यज्ञियाश्च । ऊर्क् इत्यन्ननाम । ऊर्जयतीति सतः । पक्वं सुप्रवृक्णमिति वा । पञ्च जना मम होत्रं जुषध्वम् । गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके । चत्वारो वर्णाः निषादः पञ्चमः इत्यौपमन्यवः । निषादः कस्मात् । निषदनो[1] भवति । निषण्णमस्मिन्[2] पापकमिति नैरुक्ताः[3] । यत्पाञ्चजन्यया विशा ( ऋ० सं० ८।६३।७ ) । पञ्चजनीनया विशा । पञ्च पृक्ता संख्या । स्त्रीपुंनपुंसकेष्व-विशिष्टा । बाहुनामान्युत्तराणि द्वादश ( निघ० २।४ ) । बाहू ( निघ० ८ ) कस्मात् । प्रबाधते आभ्यां कर्माणि । अङ्गुलिनामान्युत्तराणि द्वाविंशतिः ( निघ० २।५ ) । अङ्गुलयः कस्मात् । अग्रगामिन्यो भवन्तीति वा[4] । अग्रगालिन्यो भवन्तीति वा[5] । अग्रकारिण्यो भवन्तीति वा[6] । अङ्कना[7]ः भवन्तीति वा । अञ्जनाः भवन्तीति वा । अपि वा । अभ्यञ्चनादेव स्युः । तासामेषा भवति (महा० ८ ॥ गु० २ अथवा ९ ) ।

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः । दशा-भीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ( ऋ०सं० १०। ९४।७ ) अवनयः (११) अङ्गुलयो भवन्ति । कर्माणि अवन्ति । कक्ष्याः (१०) प्रकाशयन्ति कर्माणि । योक्त्राणि (१६) योजनानि (१७) इति व्याख्यातम् । अभीशवः (२०) अभ्यश्नुवते कर्माणि । दश धुरो दश युक्ता वहद्भ्यः । धूः । (१८) धूर्वतेर्वधकर्मणः । इयमपीतरा धूरेतस्मादेव । विहन्ति वहम् । धारयतेर्वा - कान्तिकर्मणः उत्तरे धातवोऽष्टादश ( निघ० २।६ ) । अन्ननामान्युत्तराण्यष्टा-विंशतिः ( निघ० २।७ ) । अन्नं कस्मात् । आनतं भूतेभ्यः । अत्तेर्वा । अत्ति-कर्माणः उत्तरे धातवो दश ( निघ० २।८ ) । बलनामान्युत्तराण्यष्टाविंशतिः ( निघ० २।९ ) । बलं कस्मात् । भरं भवति । बिभर्तेः[9] । धननामान्युत्तराण्यष्टा-विंशतिरेव ( निघ० २।१० ) । धनं कस्मात् धिनोतीति सतः । गोनामान्यु-

---

१ 'निषदनो भवति' आ. २ 'निःषण्णं' अ. ३ 'नैरुक्ताः' ई. ४ 'इति वा' ई. ५ 'अग्रकारिण्यो वा भवन्ति । अ०' इ. ६ अग्रसारिण्यो भवन्तीति वा । अङ्क०' ओ. ७ 'अञ्चनाः' एकस्मिन् गुर्जरपुस्तके । 'अञ्जना भवन्तीति वा' ई. ८ 'अभ्यञ्जनादेव अ.' 'अभ्यञ्चनादेव स्युः' अत्र दुर्गः 'अभ्यञ्जनाः' इति पाठान्तरमपि व्याख्याति' । ९ 'बिभर्तेर्वा' इ.

त्तराणि नव (निघ० २।११) । क्रुध्यतिकर्माणः उत्तरे धातवो दश (निघ०२।१२)। क्रोधनामान्युत्तराण्येकादश (निघ०२।१३) । गतिकर्माणः उत्तरे धातवो द्वाविंशं शतम् ( निघ० २।१४ )। क्षिप्रनामान्युत्तराणि षड्विंशतिः (निघ० २।१५)। क्षिप्रं कस्मात् । संक्षिप्तो विकर्षः । अन्तिकनामान्युत्तराण्येकादश ( निघ०२।१६ ) । आन्तिकं कस्मात् । आनीतं भवति । संग्रामनामान्युत्तराणि षट्चत्वारिंशत् (निघ० २।१७ ) । संग्रामः कस्मात् । संगमनाद्वा । संगरणाद्वा । संगतौ ग्रामाविति वा । तत्र खले ( २।१७।३८ ) इत्येतस्य निगमाः भवन्ति ( महा० ९ ॥ गु० ३ अथवा १० )।

अ॒भी॒३दमेक॒मेको॑ अस्मि नि॒[2]ष्षाळ॒भी द्वा किमु॒ त्रयः॑ करन्ति । खले॒ न प॒र्षान् प्रति॑ हन्मि॒ भूरि॒ किं मा॑ निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः (ऋ०सं० १०।४८।७) ।। अभिभवामि इदम् एकम् एकः । अ[3]स्मि निःषहमाणः सपत्नान् । अभिभवामि द्वौ । किं मा[4] त्रयः कुर्वन्ति । एकः इता संख्या । द्वौ द्रुततरा संख्या । त्रयः तीर्णतमा संख्या । चत्वारः चलिततमा संख्या । अष्टौ अश्नोतेः । नव न वननीया । न[5] अवाप्ता वा । दश दस्ता दृष्टार्था वा । विंशतिः द्विर्दशतः । शतं दश दशतः । सहस्रं सहस्वत् । अयुतं प्र[6]युतं नियुतं तत्तदभ्यस्तम् । अ[7]र्बुदः मेघो भवति । अरणम् अम्बु । तर्द[8]ः । अम्बुमद्[9]भवतीति वा । अम्बुमद्भातीति वा । स यथा महान् बहुर्भवति वर्षन् तदिवार्बुदम् । खले॒ न प॒र्षान्प्रति॑ हन्मि॒ भूरि॑ । खले इव पर्षान् प्रतिहन्मि भूरि । खलः इति संग्रामनाम । ख[10]लतेर्वा । स्खलतेर्वा ।अयमपीतरः खलः एतस्मादेव । समास्कन्नो भ[11]वति । किं मा निन्दन्ति॒ शत्र॑वोऽनि॒न्द्राः । य इन्द्रं न विदुः[12] । इन्द्रो हि अहमस्मि अनिन्द्राः इतरे इति वा[13] । व्याप्तिकर्माणः उत्तरे धातवो दश (निघ० २।१८) । तत्र द्वे नामनी । आक्षाणः (३) आश्नुवानः । आपानः (६) आप्नुवानः । वधकर्माणः उत्तरे धातवस्त्रयस्त्रिंशत् (निघ०२।१९ ) । तत्र वियातः (१९) इत्येतद् वियातयते इति वा । वियातय

---

१ 'विरुष्टः' इ. २ 'निःषाळभी' ओ । 'निःषालभा' अथवा 'निष्षालभी' अ. ३ 'अस्मि' ई. ४ 'मम' इ. ५ 'न अवाप्ता वा' । ई. ६ 'नियुतं प्रयुतं' इ. ओ. ७ 'अम्बुदः' ओ । 'अम्बुदो मेघो भवति' ई. ८ 'तद्वोऽम्बुद' इ ओ ९ 'अम्बुमद्भवतीति वा । अम्बुमद्भातीति वा' ई । अम्बुमद्भातीति वा । अम्बुमद्भवतीति वा' । ओ. १० 'स्खलतेर्वा । खलतेर्वा' इ. ११ 'भवतीति वा' ऐ. १२ 'विविदुः' ओ. १३ 'वा' आ.

इति वा। 'आखण्डल प्र हूयसे' (ऋ० सं० ८।१७।१२)। आखण्डयितः। तडित् (२१) इत्यन्तिकवधयोः संसृष्टकर्म। ताडयतीति सतः (महा० १० ॥ गु० ४ अथवा ११)।

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि। या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः (ऋ० सं० २।२३।९)॥ त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्यः आददीमहि। याश्च दूरे तळितो याश्चान्तिके। अरातयः अदानकर्माणो वा। अदानप्रज्ञाः वा। जम्भय ताः अनप्नसः। अप्नः इति रूपनाम। आप्नोतीति सतः। विद्युत् तडिद् भवतीति शाकपूणिः। सा हि अवताडयति। दूराच्च दृश्यते। अपि तु इदम् अन्तिकनामैवाभिप्रेतं स्यात्। दूरे चित्सन्तळिदिवाति रोचसे (ऋ०सं० १।९४।७)। दूरेऽपि सन् अन्तिके इव सन् दृश्यसे इति। वज्रनामान्युत्तराण्यष्टादश (निघ० २।२०)। वज्रः (९) कस्मात्। वर्जयतीति सतः तत्रः। कुत्सः (११) इत्येतत् कृन्ततेः। ऋषिः कुत्सो भवति। कर्ता स्तोमानामित्यौपमन्यवः। अत्राप्यस्य वधकर्मैव भवति। तत्सखः इन्द्रः शुष्णं जघानेति। ऐश्वर्यकर्माणः उत्तरे धातवश्चत्वारः (निघ० २।२१)। ईश्वरनामान्युत्तराणि चत्वारि (निघ० २।२२)। तत्र इनः (४) इत्येतत्। सनितः ऐश्वर्येणेति वा। सनितमनेनैश्वर्यमिति वा (महा० ११। गु० ५ अथवा १२)।

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति। इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश (ऋ०सं० १।१६४।२१)॥ यत्र सुपतनाः आदित्यरश्मयः अमृतस्य भागम् उदकस्य अनिमिषन्तो वेदनेनाभिस्वरन्तीति वा। अभिप्रयन्तीति वा। ईश्वरः सर्वेषां भूतानां गोपायिता आदित्यः। स मा धीरः पाकमत्रा विवेशेति। धीरो धीमान्। पाकः पक्तव्यो भवति। विपक्वप्रज्ञः आदित्यः। इत्युपनिषद्वर्णो भवति। इत्यधिदैवतम्। अथा-

१ 'आखण्डयितः खण्डं खडयतेः' ओ. २ 'तालयतीति' अ. ३ 'तडितो' अथवा 'तलितो' अ. ४ 'सुवर्धयित्वा' केषुचिद्वृत्तिपुस्तकेषु. ५ 'वा' इ. ६ 'तलित्' अ ७ 'तालयति' अ. ८ तडित् अथवा 'तलित्' अ. ९ 'सन्' इ संद° अ. १० 'तत्र' एकस्मिन् उत्तयेवृत्तिपुस्तके ११ 'स्यात्' इ. १२ 'सुपर्णाः सुपतनाः' ओ. १३ 'अनिमेषमाणाः' इ. १४ 'सर्वस्य भूतस्य' गो० इ. १५ 'भवति' इ.

ध्यात्मम् । यत्र सुपतनानि इन्द्रियाणि अमृतस्य भागं ज्ञानस्य अनिमिषन्ति वेदनेनाभिस्वरन्तीति वा । अभिद्रवन्तीति वा । ईश्वरः सर्वेषामिन्द्रियाणां गोपायिता आत्मा । स मा धीरः पाकमत्राविवेशेति । धीरो धीमान् । पाकः पक्तव्यो भवति । विपक्वप्रज्ञः आत्मा । इत्यात्मगतिमाचष्टे (महा० १२ ॥ गु० ६ अथवा १३ इति तृतीयाध्यायस्य द्वितीयः पादः ) ।

बहुनामान्युत्तराणि द्वादश (३।१) । बहु कस्मात् । प्रभवतीति सतः । ह्रस्वनामान्युत्तराण्येकादश (३।२) । ह्रस्वो (२) ह्रसतेः । महन्नामान्युत्तराणि पञ्चविंशतिः (३।३) । महान् (१) कस्मात् । मानेनान्यान् जहातीति शाकपूणिः । मंहनीयो भवतीति वा । तत्र ववक्षिथ (१४) विवक्षसे (१५) इत्येते । वक्तेर्वा वहतेर्वा साभ्यासात् । गृहनामान्युत्तराणि द्वाविंशतिः (३।४) । गृहाः कस्मात् । गृह्णन्तीति सताम् । परिचरणकर्माणः उत्तरे धातवो दश (३।५) । सुखनामान्युत्तराणि विंशतिः (३।६) । सुखं कस्मात् । सु हितं खेभ्यः । खं पुनः खनतेः । रूपनामान्युत्तराणि षोळश (३।७) । रूपं रोचतेः । प्रशस्यनामान्युत्तराणि दश ( ३।८ ) । प्रज्ञानामान्युत्तराण्येकादश( ३।९ ) । सत्यनामान्युत्तराणि षट् ( ३।१० ) । सत्यं कस्मात् । सत्सु तायते । सत्प्रभवं भवतीति वा ( गु० १ अथवा १४) । अष्टौ उत्तराणि पदानि (३।११) पश्यतिकर्माणो धातवः चायतिप्रभृतीनि च नामान्यामिश्राणि । नवोत्तराणि पदानि (३।१२) सर्वपदसमाम्नानाय । अथातः उपमाः । 'यत् अतत् तत्सदृशम्' इति गार्ग्यः । तदासां कर्म । ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा अप्रख्यातं वोपमिमीते । अथापि कनीयसा ज्यायांसम् ( महा० १३॥ गु० १ अथवा २ अथवा १५ ) ।

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ( ऋ० सं० १०।४।६)। तनूत्यक् तनूत्यक्ता । वनर्गू वनगामिनौ । अग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते । तस्करः तत्करोति यत्पापकमिति नैरुक्ताः । तनोतेर्वा स्यात् । संततकर्मा भवति । अहोरात्रकर्मा वा । रशनाभिर्दशभिरभ्यधीताम् । अभ्यधी-

१ 'सुपतनाः सुपतनानि' ओ. २ 'अतिनिमिषन्ति' ओ. ३ 'भवति' ई. ४ 'षोडश' अथवा 'षोळश' अ. ५ 'उत्तरे धातवः' ओ. ६ 'तनूत्यजा' इ. ७ 'अग्निमन्थनौ' ई. ८ 'तस्करो भवति' ओ. ९ 'तनोतेर्वा स्यात्' ई. १० 'वा' ई. ११ 'अभ्यधीतामित्यभ्यधाताम्' ओ.

तारम् । ज्यायांस्तत्र गुणोऽभिप्रेतः (महा० १४॥ गु० २ अथवा ३ अथवा १६) ।

कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः । को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ( ऋ० सं० १०।४०।२ )॥ क स्वित् रात्रौ भवथः । क दिवा । क अभिप्राप्तिं कुरुथः । क वसथः । को वां शयने विधवेव देवरम् । विधवा विधातृका भवति । विधवनाद्वा विधावनाद्वेति चर्मशिराः । अपि वा । धवः इति मनुष्यनाम । तद्वियोगात् विधवा । देवरो दीव्यतिकर्मा । मर्यो मनुष्यः । मरणधर्मा । योषा यौतेः । आकुरुते सहस्थाने । अथ निपाताः (३।१३)। पुरस्तादेव व्याख्याताः (निरु० १।४–११) । यथेति कर्मोपमा (निघ० ३।१३।२) । यथा वातो यथा वनं यथा समुद्र एजति ( ऋ० सं० ५।७८।८ ) । भ्राजन्तो अग्नयो यथा (ऋ०सं० १।५०।३) । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ( ऋ० सं० १०।९७।११ ) । आत्मा अततेर्वा । आप्तेर्वा । अपि वा । आप्तः इव स्याद्यावत् व्याप्तिभूतः । अग्निर्न ये भ्राजसा रुक्मवक्षसः (ऋ० सं० १०।७८।२ ॥ निघ० ३।१३।३ ) । अग्निरिव ये भ्राजस्वन्तो रुक्मवक्षसः (महा० १५ ॥ गु० ३ अथवा ४ अथवा १७ ) ।

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ( ऋ० सं० १।४१।९ ॥ निघ० ३।१३।४ )॥ चतुरोऽक्षान् धारयतः इति तद्यथा कितवात् बिभीयात् एवमेव दुरुक्तात् बिभीयात् । न दुरुक्ताय स्पृहयेत्कदाचित् । आ इत्याकारः उपसर्गः पुरस्तादेव व्याख्यातः (निरु० १।३) । अथाप्युपमार्थे दृश्यते । जार आ भगम् ( ऋ० सं० १०।११।६ ॥ निघ० ३।१३।७ ) । जार इव भगम् । आदित्योऽत्र जारः उच्यते । रात्रेर्जरयिता । स एव भासाम् । तथापि निगमो भवति । स्वसुर्जारः शृणोतु नः (ऋ० सं०

१ 'अभिप्राप्तं' अ केषुचिद्वृत्तिपुस्तकेषु च. २ 'देवरं देवरः कस्मात् । द्वितीयो वर उच्यते । दिध०ओ. ३ 'सवस्थाने' अ. ४ अयं मन्त्रः कैश्चिन्नाधीयते इति दुर्गः. ५ '°व्वे मरुतो भ्राजमाना रोचिष्णूरस्का भ्राज०' ओ. ६ 'चतुरार्श्चित् धार०' अ. ७ ' धारयमाणात् ' ह. ८ 'इति तद्यथा' ई. ९ 'ब्राह्मणा व्रतचारिण इत्येतदुपरिष्टाद्व्याख्यास्यते । वृक्षस्य नु ते पुरुहूत वया इत्येतत् पुरस्तात् व्याख्यातम् । आ°' ह.

६।५५।५ ) इति । उषसमस्य स्वसारमाह । साहचर्यात् । रसहरणाद्वा । अपि त्वयं मनुष्यजारः एवाभिप्रेतः स्यात् । स्त्रीभगस्तथा स्यात् । भजतेः । मेषः इति भूतोपमा । मेषो भूतो ऽभि यन्नयः (ऋ० सं० ८।२।४० ॥ निघ० ३।१३।८) । मेषो मिषतेः । तथा पशुः पश्यतेः । अग्निरिति रूपोपमा (निघ० ३।१३।९–१० ) । हिरण्यरूपः स हिरण्यसंदृगपान्नपात्सेदु हिरण्यवर्णः ( ऋ०सं० २।३५।१० ) । हिरण्यवर्णस्येवास्य रूपम्[1] । था इति च ( निघ० ३।१३।१२ ) । तं प्रत्नथा पूर्वथा विश्वथेमथा ( ऋ० सं० ५।४४।१ ) । प्रत्ने इव । पूर्वे इव । विश्वे इव । इमे इव । इति[2] । अयम् एततरोऽमुष्मात् । असौ अस्ततरोऽस्मात् । अमुथा यथा असौ इति व्याख्यातम् । वत् इति
सिद्धोपमा (निघ० ३।१३।११ ) । ब्राह्मणवत् । वृषलवत् । ब्राह्मणा इव । १
वृषला इव । इति[3] ( महा० १६ ॥ गु० ४ अथवा ५ अथवा १८ ) ।

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् (ऋ० सं० १।४५।३) ॥ प्रियमेधः । प्रियाः अस्य मेधाः । यथैतेषामृषीणामेवम् । प्रस्कण्वस्य शृणु ह्वानम्[4] । प्रस्कण्वः । कण्वस्य पुत्रः
कण्वप्रभवः । यथा प्राग्रम् । अर्चिषि भृगुः संबभूव । भृगुः भृज्यमानो न देहे[5] । २
अङ्गारेषु अङ्गिराः । अङ्गाराः अङ्कनाः[6] । अत्रैव तृतीयमृच्छतेत्यूचुः । तस्मात् अत्रिः । न त्रयः इति[7] । विखननात् वैखानसः । भरणात् भरद्वाजः[8] । विरूपः नानारूपः । महिव्रतः महाव्रतः । इति ( महा० १७ ॥ गु० ५ अथवा ६ अथवा १९ इति तृतीयाध्यायस्य तृतीयः पादः ) ।

अथ लुप्तोपमानि अर्थोपमानि इत्याचक्षते । सिंहः व्याघ्रः इति पूजायाम् । २
श्वा काकः इति कुत्सायाम् । काकः इति शब्दानुकृतिः । तदिदं शकुनिषु बहुलम् । न शब्दानुकृतिर्विद्यते इत्यौपमन्यवः । काकः अपकालयितव्यो भवति । तित्तिरिः तरणात् । तिलमात्रचित्रः इति वा । कपिञ्जलः कपिरिव

१ 'हिरण्यवर्णस्येवास्य रूपं ' ई. २ 'प्रत्ने इव' ० इमे इव । इति' ई. ३ 'इति । वृषलो वृषशीलो भवति वृषाशीलो वा' ओ. ४ 'आह्वानं ई. ५ 'भृगुर्भृज्यमानो न देहे । अर्चिषि० संबभूव' ई. ६ अङ्कना अञ्चनाः' ओ. ७ 'इति वा' ई. ८ भरणात् भरद्वाजः' ई.

जीर्णः । कपिरिव जवते[1] । ईषत्पिङ्गलो वा । कमनीयं शब्दं पिञ्जयतीति वा । श्वा शुयायी । शवतेर्वा[2] स्याद्गतिकर्मणः । श्वसितेर्वा । सिंहः सहनात् । हिंसेर्वा[3] विपरीतस्य । संपूर्वस्य वा हन्तेः । संहाय हन्तीति वा । व्याघ्रः व्याघ्राणात् । व्यादाय हन्तीति वा ( महा० १८ ॥ गु० १ अथवा २० ) ।

अर्चतिकर्माणः उत्तरे धातवश्चतुश्चत्वारिंशत् ( ३।१४ ) । मेधाविनामान्युत्तराणि चतुर्विंशतिः ( ३।१५ ) । मेधावी कस्मात् । मेधया तद्वान् भवति । मेधा मतौ धीयते । स्तोतृनामान्युत्तराणि त्रयोदश[5] ( ३।१६ ) । यज्ञनामान्युत्तराणि पञ्चदश ( ३।१७ ) । यज्ञः (१) कस्मात् । प्रख्यात यजतिकर्मेति नैरुक्ताः । याच्ञो भवतीति वा । यजुरुन्नो भवतीति वा । बहुकृष्णाजिनः इत्यौपमन्यवः । यजूंष्येनं नयन्तीति वा । ऋत्विङ्नामान्युत्तराण्यष्टौ (३।१८) । ऋत्विक् कस्मात् । ईरणः । ऋग्यष्टा भवतीति शाकपूणिः । ऋतुयाजी भवतीति वा । याच्ञाकर्माणः उत्तरे धातवः सप्तदश ( ३।१९ ) । दानकर्माणः उत्तरे धातवो दश ( ३।२० ) । अध्येषणाकर्माणः उत्तरे धातवश्चत्वारः ( ३।२१ ) । स्वपितिसस्तीति द्वौ स्वपितिकर्माणौ ( ३।२२ ) । कूपनामान्युत्तराणि चतुर्दश ( ३।२३ ) । कूपः (१) कस्मात् । कुपानं भवति । कुप्यतेर्वा । स्तेननामान्युत्तराणि चतुर्दशैव ( ३।२४ ) । स्तेनः कस्मात् । संस्त्यानम् अस्मिन् पापकमिति नैरुक्ताः[6] । निर्णीतान्तर्हितनामधेयान्युत्तराणि षट्[7] ( ३।२५ ) । दूरनामान्युत्तराणि पञ्च ( ३।२६ ) । दूरं कस्मात् । द्रुतं भवति । दुरयं[8] वा । पुराणनामान्युत्तराणि षट् ( ३।२७ ) । पुराणं कस्मात् । पुरा नवं भवति । नवनामान्युत्तराणि षळेवं[9] (३।२८) । नवं (१) कस्मात् । आनीतं भवति (महा० १९ ॥ गु० २ अथवा २१ ) ।

द्विशः उत्तराणि नामानि ( ३।२९ ) । प्रपित्वे ( १ ) अभीके (२) इत्यासन्नस्य । प्रपित्वे प्राप्ते । अभीके अभ्यक्ते । आपित्वे नः प्रपित्वे तूयमा गहि ( ऋ० सं० ८।४।३ ) । अभीके चिदु लोककृत ( ऋ० सं०

---

१ 'जवत् इति वा' इ. २ 'स्यात्' ई. ३ 'हिंसेर्वा विपरीतस्य' ई. ४ 'स्याद्विपरीतस्य' ओ. ५ 'त्रयोदश । स्तोता स्तवनात् । यज्ञ०' ओ. ६ 'इति नैरुक्ताः' ई. ७ 'षट् । निर्णीतं कस्मात् । निर्णिक्तं भवति । दूर०' ओ. ८ 'दूरयं' अ ९ 'षडेव' अथवा 'षळेव' अ.

१०।१३३।१ ) इत्यपि निगमौ भवतः। दभ्रम् (३) अर्भकम् (४) इत्यल्पस्य। दभ्रं दभ्नोतेः। सुदम्भं भवति। अर्भकम् अवहृतं भवति। उपोप मे॒ परा॑ मृश॒ मा मे॑ द॒भ्राणि॑ मन्यथाः (ऋ० सं० १।१२६।७)। नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यः॑ (ऋ० सं० १।२७।१३) इत्यपि निगमौ भवतः। तिरः (५) सतः (६) इति प्राप्तस्य[1]। तिरः तीर्णं भवति। सतः संसृतं भवति। ति॒रश्चि॑द॒र्यया॒ परि॑ व॒र्तिर्या॑त॒मदा॑भ्या (ऋ० सं० ५।७५।७)। पात्रे॑व भि॒न्दन्त्स॒त ए॑ति र॒क्षसः॑ (ऋ० सं० ७।१०४।२१) इत्यपि निगमौ भवतः। त्वः (७) नेमः (८) इत्यर्धस्य। त्वः अपततः। नेमः अपनीतः। अर्धं हरतेर्विपरीतात्। धारयतेर्वा स्यात्। उद्धृतं भवति। ऋध्नोतेर्वा स्यात्। ऋद्धतमो विभागः। पीय॑ति त्वो॒ अनु॑ त्वो॒ गृणाति (ऋ०सं० १।१४७।२)। नेमे देवा नेमेऽसुराः (मैत्रा० सं० १।१।९) इत्यपि निगमौ भवतः। ऋक्षाः (९) स्तृभिः (१०) इति नक्षत्राणाम्। नक्षत्राणि नक्षतेर्गतिकर्मणः। 'नेमानि[2] क्षत्राणि' इति च ब्राह्मणम्। ऋक्षाः उदीर्णानीव ख्यायन्ते। स्तृभिस्तीर्णानीव ख्यायन्ते। अ॒मी य ऋ॒क्षा निहि॑तास उ॒च्चा (ऋ०सं० १।२४।१०)। पश्य॑न्तो॒ द्यामि॑व स्तृ॒भिः (ऋ० सं० ४।७।३) इत्यपि निगमौ भवतः। (गु० ३ अथवा २२)। वम्रीभिः (११) उपजिह्विकाः (१२) इति सीमिकानाम्। वम्र्यः वमनात्। सीमिकाः स्यमनात्। उपजिह्विकाः उपजिघ्र्यः। यद॑त्त्युप॒जिह्वि॑का॒ यद्व॒म्रो अ॑ति॒सर्प॑ति[3] (ऋ० सं० ८।१०२।२१) इत्यपि निगमो[4] भवति। ऊर्दरं (१३) कृदरं (१४) इत्यावपनस्य। ऊर्दरम् उद्दीर्णं भवति। ऊर्जे दीर्णम् इति वा। तमूर्द॑रं॒ न पृ॑णता॒ यवे॑न (ऋ० सं० २।१४।११) इत्यपि[5] निगमो भवति। तम् ऊर्दरमिव पूरयति[6] यवेन। कृदरं[7] कृतदरं भवति। समि॑द्धो अ॒ञ्जन्कृद॑रं मती॒नाम् (मैत्रा० सं० ३।१६।२ तै०सं० ५।१।११।य० वा०सं० २९।१) इत्यपि निगमो भवति (महा०२०)।

---

१ 'अप्राप्तस्य' इदं पाठान्तरं दुर्गवृत्तौ दृश्यते २ 'नेमा न°' अ ३ 'वम्रीभिः पुत्रमग्रुवो अदानम्। यदत्त्यु°' ओ. ४ निगमौ भवतः' ओ. ५ 'तमर्दरं समिद्धो अञ्जन् इत्यपि निगमौ भवतः' इ. ६ 'इत्यपि निगमो भवति' ई. ७ 'पूरयत' इ. ८ 'कुदरं कृतदरं भवति' ई.

रम्भः (१५) पिनाकम् (१६) इति दण्डस्य । रम्भः आरभन्ते एनम् । आ त्वा र॒म्भं न जिव्र॑यो ररम्भा (ऋ० सं० ८।४५।२० ) इत्यपि निगमो भवति । आरभामहे त्वा जीर्णाः इव दण्डम् । पिनाकं प्रतिपिनष्टि एनेन । कृत्तिवासाः पिनाकहस्तोऽवततधन्वा ( काठकसं० ९।८ ) इत्यपि निगमो भवति ( गु० ४ अथवा २३ ) । मेनाः ( १७ ) ग्नाः ( १८ ) इति स्त्रीणाम् । स्त्रियः स्त्यायतेः अपत्रपणकर्मणः । मेनाः मानयन्ति एनाः । ग्नाः गच्छन्ति एनाः । अमेनांश्चिज्जनिवतश्चकर्थ ( ऋ० सं० ५।३१।२ ) । ग्नास्त्वाकृन्तन्नप-सोऽतन्वतेन ( मैत्रा० सं० १।९।४ ) इत्यपि निगमौ भवतः । शेपः ( १९ ) वैतसः ( २० ) इति पुंस्प्रजननस्य । शेपः शपतेः स्पृशतिकर्मणः । वैतसः वितस्तं भवति । यस्या॑मु॒शन्त॑: प्र॒हरा॑म॒ शेप॑म् ( ऋ० सं० १०।८५।३७ ) । त्रिः स्म॒ माह्नः श्नथयो वैतसेन ( ऋ० सं० १०।९५।५ ) इत्यपि निगमौ भवतः । अया ( २१ ) एना ( २२ ) इत्युपदेशस्य । अ॒या ते॑ अग्ने स॒मिधा॑ विधेम ( ऋ० सं० ४।४।१५ ) इति स्त्रियाः । ए॒ना वो॑ अ॒ग्निम् ( ऋ० सं० ७।१३।१ ) इति नपुंसकस्य । ए॒ना पत्या॑ त॒न्वं१ सं सृ॑ज॒स्व (१०।८५।२७) इति पुंसः । सिषक्तु ( २३ ) सचते ( २४ ) इति सेवमानस्य । स नः॑ सि-षक्तु यस्तु॒रः ( ऋ० सं० १।१८।२ ) । स नः सेवतां यस्तुरः । सचस्वा नः स्व॒स्तये॑ ( ऋ० सं० १।१।९ ) । सेवस्व नः स्वस्तये । स्वस्ति इत्यविनाशि-नाम । अस्तिः अभिपूजितः स्वतीति । भ्यसते ( २५ ) रेजते ( २६ ) इति भयवेपनयोः । य॒स्य शुष्मा॒द्रोद॑सी अभ्य॑सेताम् ( ऋ० सं० २।१२।१ ) । रेज॑ते अग्ने पृ॒थि॒वी म॒खेभ्यः॑ ( ऋ० सं० ६।६६।९ ) इत्यपि निगमौ भवतः । द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः ( ३।३० ) । तयोरेषा भवति ( महा० २१ ॥ गु० ५ अथवा २४ ) ।

क॒त॒रा पूर्वा॑ क॒त॒राप॑रा॒योः क॒था जा॒ते क॑वयः॒ को वि वे॑द । विश्वं॒ त्मना॑ बिभृतो॒ यद्ध॒ नाम॒ वि व॑र्तेते॒ अह॑नी च॒क्रिये॑व ( ऋ० सं०

१ 'इत्यपि निगमो भवति' ई. २ 'सिषक्ति' अ. ३ 'इत्यविनाशनाम' अ । इदं पाठा-न्तरमपि वृत्तौ दीयते. ४ 'स्व अस्तीति' अ.

१।१८५।१ ) ॥ कतरा पूर्वा । कतरा अपरा एनयोः । कथं जाते । कवयः कः एने विजानाति । सर्वम् आत्मना बिभृतो यत् ह एनयोः कर्म । विवर्तेते च एनयोः अहनी अहोरात्रे चक्रयुक्ते इव । इति द्यावापृथिव्योर्महिमानमाचष्टे आचष्टे ( मह्रा० २२ ॥ गु० ६ अथवा २५ इति तृतीयाध्यायस्य चतुर्थः पादः)।

इति तृतीयोऽध्यायः ।

---

१ 'अनयोः' ड. २ 'एने' ई. ३ 'कर्म' ई.

# चतुर्थोऽध्यायः ।

ॐ एकार्थमनेकशब्दमित्येतदुक्तम् ( निरु० १।२० )। अथ यान्यनेकार्थानि एकशब्दानि तान्यतोऽनुक्रमिष्यामः । अनवगतसंस्कारांश्च निगमान् । तत् ऐकपदिकम् इत्याचक्षते। जहा ( निघ० ४।१।१ )। जघानेत्यर्थः( १ )।

को नु मर्या अमिथितः सखा सखायमब्रवीत् । जहा को अस्मदीषते (ऋ०सं०८।४५।३७)॥ मर्याः इति मनुष्यनाम । मर्यादाभिधानं वा स्यात् । मर्यादा मर्यैरादीयते । मर्यादा मर्यादिनोर्विभागः। मेथतिः आक्रोशकर्मा । अपापकं जघान कमहं जातु । कोऽस्मद्भीतः पलायते । निधा ( २ ) पाश्या भवति । यन्निधीयते। पाश्या पाशसमूहः । पाशः पाशयतेः । विपाशनात्(२)।

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः। अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य स्मान्निधयेव बद्धान् ( ऋ० सं० १०।७३।११ )॥ वयः वेः बहुवचनम्। सुपर्णाः सुपतनाः । आदित्यरश्मयः। उपसेदुः इन्द्रं याचमानाः । अपोर्णुहि आध्वस्तं चक्षुः । चक्षुः ख्यातेर्वा । चष्टेर्वा। पूर्धि पूरय । देहि इति वा । मुञ्च अस्मान् पाशैरिव बद्धान् । पार्श्वतः श्रोणितः शितामतः ( मैत्रा० सं० ४।१३।७ ) । पार्श्वं पर्शुमयम् अङ्गं भवति । पर्शुः स्पृशतेः ।संस्पृष्टा पृष्ठदेशम् । पृष्ठं स्पृशतेः । संस्पृष्टम् अङ्गैः । अङ्गम् अङ्गनात् । अञ्चनाद्वा । श्रोणिः श्रोणतेः गतिचलाकर्मणः । श्रोणिः चलतीव गच्छतः। दोः शिताम ( ३ ) भवति। दोः द्रवतेः । योनिः शिताम इति शाकपूणिः । विषितो भवति । श्यामतः यकृत्तः इति तैटीकिः । श्यामं श्यायतेः । यकृत् यथाकथा च कृत्यते । शितिमांसतः मेदस्तः इति गालवः । शितिः श्यतेः । मांसं माननं वा । मानसं वा । मनः अस्मिन् सीदतीति वा । मेदः मेद्यतेः ( ३ ) ।

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः। राधस्तन्नो विदद्वस उभयाहस्त्या भर ( ऋ० सं० ५।३९।१ )॥ यदिन्द्र चायनीयं मंहनीयं धनमस्ति । यन्म

---

१ 'मर्यादा मर्यैरादीयते' आ. २ 'पाशयतेर्बन्धनार्थस्य' केषुचिद्वृत्तिपुस्तकेषु ३ 'पाशसमूहेन इव' इ. ४ 'पर्शु' अ ओ. ५ 'यथाकथंचित्' इ. ६ 'चित्र चायनीयं' ओ। 'चित्रं चायनीयं' केषुचिद्वृत्तिपुस्तकेषु । केषुचित् 'चित्र चायनीय'.

इद नास्तीति वा त्रीणि मध्यमानि पदानि । त्वया नस्तद्दातव्यम् । अद्रिवन् । अद्रिः आदृणात्येनेन । अपि वा । अत्तेः स्यात् । ते सोमादः (ऋ० सं० १०।९४।९ ) इति ह विज्ञायते । राधः इति धननाम । राध्नुवन्त्येनेन[1] । तन्नस्त्वं वित्तधन उभाभ्यां हस्ताभ्याम् आहर । उभौ समुब्धौ भवतः । दमूनाः (४) । दममनाः वा[2] । दानमनाः वा । दान्तमनाः वा । अपि वा । दमः इति गृहनाम । तन्मनाः स्यात् । मनः[3] मनोतेः ( ४ ) ।

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् । विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ( ऋ० सं० ५।४।५ ) ॥ अतिथिः । अभ्यतितो गृहान् भवति । अभ्येति तिथिषु परकुलानीति वा । गृहाणीति[4] वा[5] । दुरोण इति गृहनाम । दुरवाः भवन्ति । दुस्तर्पाः । इमं नो यज्ञमुपयाहि विद्वान् । सर्वाः अग्ने आभियुजः विहत्य शत्रूयताम् आहर[6] भोजनानि । विहत्य[7] अन्येषां बलानि शत्रूणां भवतामाहर[8] भोजनानीति वा । धनानीति वा । मूषः (६) । मूषिकाः इत्यर्थः । मूषिकाः पुनः मुष्णातेः । मूषोऽप्येतस्मादेव (५) ।

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः । मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो वित्तं मे अस्य रोदसी (ऋ०सं०१।१०५।८)॥ संतपन्ति माम् अभितः सपत्न्यः[9] इव इमाः[10] पर्शवः[11] कूपपर्शवः । मूषिकाः इव अज्ञातानि[12] सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्यात् । शिश्नानि व्यदन्तीति । संतपन्ति मा आध्यः कामाः स्तोतारं ते शतक्रतो । वित्तं मे अस्य रोदसी । जानीतं मेऽस्य द्यावापृथिव्यौ इति । त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ । तत्र ब्रह्म इतिहासमिश्रम् ऋङ्मिश्रं गाथामिश्रं भवति[13] । त्रितः तीर्णतमो मेधया बभूव । अपि वा । संख्यानामैवाभिप्रेतं स्यात् । एकतो द्वितस्त्रित इति त्रयो[14] बभूवुः (६) ।

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः । सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ( ऋ० सं० ८।४८।७ ) ॥

---

१ 'राध्नुवन्त्येनेन' ई. २ 'वा' ई. ३ 'मनः मनोतेः' ई. ४ 'परगृहाणीति' ओ ।'गृहाणीति वा' ई. ५ 'वा । अयमपीतरोऽतिथिरेतस्मादेव' वज्ञपाठे, ६ 'आभर' ओ. ७ 'निहत्य' ओ. ८ 'भवनादाहर' ओ. ९ 'सपत्नीः' इ. १० 'एताः' इ. ११ 'पर्शवः' ई. १२ 'इवान्नामिश्राणि' इ. १३ 'च भवति' इ. १४ 'त्रयो भ्रातरो' इ.

ईषणेन वा । एषणेन वा । ऋषणेन वा । ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य । प्रवर्धय च नः आयूंषि सोम राजन् । अहानीव सूर्यो वासराणि । वासराणि वेसराणि । विवासनानि[1] । गमनानीति वा । कुरुतन (८) इति । अनर्थकाः उपजनाः भवन्ति । कर्तन हन्तन यातन इति । जठरम् (९) उदरं भवति । जग्धमस्मिन् ध्रियते धीयते वा (७) ।

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय । आ सिंञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् (ऋ० सं० ३।४७।१) ॥ मरुत्वान् इन्द्र । मरुद्भिः[2] तद्वान् । वृषभो वर्षिता अपाम् । रणाय रमणीयाय संग्रामाय । पिब सोमम् । अनुष्वधम् अन्वन्नम् । मदाय मदनीयाय जैत्राय । आसिञ्चस्व जठरे मधुनः ऊर्मिम् । मधु सोमम् इत्यौपमिकम् । माद्यतेः । इदमपीतरत् मधु एतस्मादेव । त्वं राजासि पूर्वेष्वपि अहःसु सुतानाम् (८॥ गु० इति चतुर्थाध्यायस्य प्रथमः पादः ) ।

तितउ (१०) परिपवनं भवति । ततवत् वा । तुन्नवत् वा । तिलमात्रतुन्नम् इति वा ( महा० ९॥ गु० १ अथवा ९ ) ।

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि (ऋ० सं० १०।७१।२)॥ सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेः । दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य । विकसितो भवति । यत्र धीरा मनसा वाचमकृषत प्रज्ञानम्[3] । धीराः प्रज्ञानवन्तः ध्यानवन्तः । तत्र सखायः सख्यानि संजानते । भद्रैषां लक्ष्मीर्निहिताधि वाचि[4] । भद्रं भगेन व्याख्यातम् ( निरु० ३।१६ ) । भजनीयम् । भूतानाम् अभिद्रवणीयम् । भवत् रमयतीति वा । भाजनवद्वा । लक्ष्मीः लाभाद्वा । लक्षणाद्वा[5] । लप्स्यनाद्वा । लाञ्छनाद्वा[6] । लषतेर्वा स्यात्प्रेप्साकर्मणः । लग्यतेर्वा स्यादाश्लेषकर्मणः । लज्जतेर्वा स्यादश्लाघाकर्मणः । शिप्रे (११) इत्युपरिष्टात् ( निरु० ६।१७ ) व्याख्यास्यामः ( महा० १०॥ गु० २ अथवा १० ) ।

---

१ 'विवासनानीति वा' ङ. २ 'मरुद्भिः तद्वान्' ई. ३ 'प्रज्ञानम्' इदं पाठान्तरमिति दुर्गेण दीयते. ४ वाचीति' ॆ. ५ 'आलक्षणाद्वा' ङ. ६ 'लञ्छनाद्वा' अ.

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ( ऋ० सं० १।११५।४ )॥ तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते । यदासौ अयुक्त[1] हरणान्[2] आदित्यरश्मीन् । हरितः अश्वान् इति वा । अथ रात्री वासस्तनुते सिमस्मै । वेसरम्[3] अहर अवयुवती सर्वस्मात् । अपि वा । उपमार्थे स्यात् । रात्रीव वासस्तनुते इति । तथापि निगमो भवति । पुनः समव्यद्विततं वयन्ती ( ऋ० सं० २।३८।४ ) । समनात्सीत् ( महा० ११ ॥ गु० ३ अथवा ११ ) ।

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ( ऋ० सं० १।६।७ ) ॥ इन्द्रेण हि संदृश्यसे संगच्छमानः अबिभ्युषा गणेन । मन्दू (१३) मदिष्णू युवां स्थः । अपि वा । मन्दुना तेन इति स्यात् । समानवर्चसा इत्येतेन व्याख्यातम् ( महा० १२ ॥ गु० ४ अथवा १२ ) ।

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः । हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ( ऋ० सं० १।१६३।
१० ) । ईर्मान्ताः समीरिन्तान्ताः । पृथ्वन्ताः वा । सिलिकमध्यमाः संसृत- १
मध्यमाः । शीर्षमध्यमाः वा । अपि वा । शिरः आदित्यो भवति । यत् अनुशेते सर्वाणि भूतानि । मध्ये चैषां तिष्ठति । इदमपीतरत् शिरः एतस्मादेव । समाश्रितानि एतत् इन्द्रियाणि भवन्ति । सं शूरणासो दिव्यासो अत्याः । शूरः शवतेर्गतिकर्मणः । दिव्याः दिविजाः । अत्याः अतनाः । हंसा इव श्रेणिशो
यतन्ते । हंसाः हन्तेः । घ्नन्ति अध्वानम् । श्रेणिशः इति । श्रेणिः[5] श्रयतेः । २
समाश्रिताः भवन्ति । यदा अक्षिषुः । यदा आपन् । दिव्यम् अज्मम् अजनिम् आर्जिम्[6] । अश्वाः । अस्त्यादित्यस्तुतिरश्वस्य । आदित्यादश्वो निस्तष्ट इति । सूरादश्वं वसवो निरतष्ट ( ऋ० सं० १।१६३।२ ) इत्यपि निगमो भवति ( महा० १३ ॥ गु० ५ अथवा १३ ) ।

---

१ 'अयुङ्क्त' ओ. २ 'रसहरणान् रश्मीन्' इ. ३ 'वासरम्' सायणः. ४ 'समीरितान्ताः सुसमीरितान्ताः' ओ. ५ 'श्रेणिः ०भवन्ति' ई. । 'श्रोणिः' अ. ६ 'आर्जि' ई.

कायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ( ऋ० सं० ३।९।२ ) ॥ कायमानः (१५) चायमानः । कामयमानः इति वा । वनानि । त्वं यत् मातॄः अपः अगमः उपशाम्यन् । न तत्ते अग्ने प्रमृष्यते निवर्तनं दूरे यत्सन् इह भवसि जायमानः । लोधं नयन्ति पशु मन्यमानाः ( ऋ० सं० ३।५३।२३ ) । लुब्धम् ऋषिं नयन्ति पशुं मन्यमानाः । शीरं पावकशोचिषम् ( ऋ० सं० ८।१०२।११ ) । पावकदीप्तिम् । अनुशायिनम् इति वा । आशिनम् इति वा ( महा० १४ ॥ गु० ६ अथवा १४ ) ।

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ( ऋ० सं० ४।३२।२३ ) ॥ कनीनके कन्यके । कन्या कमनीया भवति ।[1]क्वेयं नेतव्येति वा । कनतेर्वा स्यात्कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति[2] शाकपूणिः । [3]विद्रध्योर्दारुपादयोः । दारु दृणातेर्वा । द्रूणातेर्वा । [4]तस्मादेव द्रु । नवे नवजाते । अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते । बभ्र्वो[5]रश्वयोः संस्तवः । इदं च मेऽदादिदं च मेऽदादित्यृषिःप्रसंख्यायाह । सुवास्त्वा अधि तुग्वनि ( ऋ० सं० ८।१९।३७ ) । सुवास्तुः नदी । तुग्व (२०) तीर्थं भवति । तूर्णमेतदायन्ति । कुविन्नंसन्ते मरुतः पुनर्नः ( ऋ० सं० ७।५८।५ ) । पुनर्नो नमन्ते[6] मरुतः । नसन्तं[7] (२२) इत्युपरिष्टात् ( निरु० ७।१७ ) व्याख्यास्यामः । ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम् ( ऋ० सं० ९।७५।५ ) । ये ते मदाः आहननवन्तः वर्चनवन्तः[8] तैरिन्द्रं चोदय दानाय मघम् ( महा० १५ ॥ गु० ७ अथवा १५ ) ।

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि । अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ( ऋ० सं० १।१२४।४ ) ॥ उपादर्शि शुन्ध्युवः । शुन्ध्युः आदित्यो भवति । शोधनात् ।

---

१ 'वा । कमनेनानीयते इति वा' औ । दुर्गवृत्तौ प्रक्षिप्तम्. २ 'सप्तम्येकवचनानीति' औ. ३ 'व्यृद्ध्योः' अ. ४ 'एतस्मादेव' इ. ५ 'बभ्रूवोरश्मयोः' अथवा 'बभ्र्वोरश्मयोः' अथवा 'बभ्रूरश्मयोः' अ. ६ 'नवन्ते' अ. ७ 'नसत' अ. ८ 'वश्चनवन्तः' अ.

तस्यैव वक्षः भासः । अध्यूढम् । इदमपीतरत् वक्षः एतस्मादेव । अध्यूढं
काये । शकुनिरपि शुन्ध्युरुच्यते । शोधनादेव । उदकचरो भवति । आपोऽपि
शुन्ध्यवः उच्यन्ते । शोधनादेव । नोधाः ऋषिर्भवति । नवनं दधाति । स यथा
स्तुत्या कामानाविष्कुरुते एवमुषा रूपाण्याविष्कुरुते । अम्रसद् । अम्र अन्नं
भवति । अम्रसादिनी इति वा । अम्रसानिनी इति वा । संसतो बोधयन्ती
शश्वत्तमागात्पुनरेयुषीणाम् । स्वपतो बोधयन्ती शाश्वतिकतमागात् पुनरागा-
मिनीनाम् । ते वाशीमन्त इष्मिणः ( ऋ० सं० १।८७।६ ) । ईषणिनः इति
वा । एषणिनः इति वा । आर्षणिनः इति वा । वाशी ( निघ० १।११।११ )
इति वाङ्नाम । वाश्यते इति सत्याः । शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय
वाहः कृणवाव जुष्टम् ( ऋ० सं० ३।५३।३ ) । अभिवहनस्तुतिम् । अभि- १
षवणप्रवादां स्तुतिं मन्यन्ते । ऐन्द्री त्वेव शस्यते । परितक्म्या ( २७ ) इत्यु-
परिष्टात् ( निरु० ११।२५ ) व्याख्यास्यामः ( महा० १६ ॥ गु० ८ अथवा
१६ चतुर्थाध्यायस्य द्वितीयः पादः ) ।

सुविते (२८) सु इते । सूते । सुगते । प्रजायाम् इति वा । सुविते मा धाः
( मैत्रा० सं० १।२।७ ) इत्यपि निगमो भवति । दयतिः (२९) अनेककर्मा । १
नवेन पूर्वं दयमानाः स्याम ( मैत्रा० सं० ४।१३।७) इत्युपदयाकर्मा । य
एक इद्विदयते वसु ( ऋ० सं० १।८४।७ ) इति दानकर्मा वा विभाग-
कर्मा वा । दुर्वर्तुर्भीमो दयते वनानि ( ऋ० सं० ६।६।५ ) इति दहति-
कर्मा । दुर्वर्तुः दुर्वारः । विदद्वसुर्दयमानो वि शत्रून् (ऋ० सं० ३।३४।१)
इति हिंसाकर्मा । इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना २
तान् । अयं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् ॥
दयमान इति । नूचित् ( ३० ) इति निपातः पुराणनवयोः । नू च (३१)
इति च । अद्या चिन्नू चित्तदपो नदीनाम् ( ऋ० सं० ६।३०।३ ) । अद्य

१ 'भासा' अ. २ 'अध्यूह्लः' अथवा 'अध्यूढः' अ । 'अध्यूळ्हं' सायणभाष्ये. ३ 'अध्यूह्लं' अ । 'अध्यूळ्हं' सायणभाष्ये. ४ 'एवमुखा' एकस्मिन् गुर्जरपुस्तके. ५ 'अन्नसानिनी' ओ. ६ 'स्वपतो बोधयन्ती' आ. ७ 'पुनरेयुषीणाम्' अ. ८ 'स्तुतिः' इ. ९ 'अधिषवण' ओ. १० 'इमे ०वन्दनाय' ई. ११ 'अहं' अ.

च पुरा च तदेव कर्म नदीनाम्। नू च पुरा च सदनं रयीणाम् (ऋ० सं० १।९६।७)। अद्य च पुरा च सदनं रयीणाम्। रयिः[1] (निघ० २।१०।८) इति धननाम। रातेर्दानकर्मणः (महा० १७ ॥ गु० ८ अथवा १७)।

विद्याम तस्य ते वयमकूपारस्य दावने (ऋ०सं०५।३९।२)। विद्याम तस्य ते वयम् अकुपरणस्य[2] दानस्य। आदित्योऽपि अकूपारः उच्यते। अकूपारो[3] भवति। दूरपारः[4]। समुद्रोऽपि अकूपारः उच्यते। अकूपारो भवति। महापारः। कच्छपोऽपि अकूपार उच्यते। अकूपारः[5] न कूपम् ऋच्छति इति। कच्छपः कच्छं पाति। कच्छेन पातीति वा। कच्छेन पिबतीति वा। कच्छः खच्छः। खच्छदः। अयमपीतरो नदीकच्छः एतस्मादेव। कम् उदकम्। तेन छाद्यते। शिशीते शृङ्गे रक्षसे विनिक्षे (ऋ० सं० ५।२।९)। निश्यति शृङ्गे रक्षसो विनिक्षणनाय। रक्षः रक्षितव्यम् अस्मात्। रहसि क्षणोति इति वा। रात्रौ नक्षते इति वा। अग्निः सुतुकः सुतुकेभिरश्वैः (ऋ० सं० १०।३।७)। सुतुकनः सुतुकनैः इति वा। सुप्रजाः सुप्रजोभिः इति वा। सुप्रायणा अस्मिन्यज्ञे विश्रयन्ताम् (प्रैषः ६)। सुप्रगमनाः (महा० १८ ॥ गु० २ अथवा १८)।

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे (ऋ०सं० १।८९।१)। देवाः नो यथा सदा वर्धनाय स्युः[6] अप्रायुवः अप्रमाद्यन्तः रक्षितारश्च अहनि अहनि। च्यवनः (३८) ऋषिर्भवति। च्यावयिता स्तोमानाम्। च्यवानम् इत्यप्यस्य निगमा भवन्ति। युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः (ऋ० सं० १०।३९।४)। युवां च्यवानं[7] सनयं पुराणं[8] यथा रथं पुनर्युवानं चरणाय ततक्षथुः। युवा प्रयौति कर्माणि। तक्षतिः करोतिकर्मा। रजः (३९) रजतेः। ज्योतिः रजः उच्यते। उदकं रजः उच्यते। लोकाः रजांसि उच्यन्ते। असृगहनी रजसी उच्येते[9]। हरः (४०) हरतेः।

---

१ 'रयिः इति धननाम। रातेर्दानकर्मणः' ई. २ 'अकूपरणस्य' अ.। केषुचिन्महाराष्ट्रपुस्तकेषु 'अकुपर्णस्य'. ३ 'अकूपारो भवति' ई. ४ 'दूरपारः' ई. ५ 'अकूपारः' ई. ६ "भाष्येऽपि 'स्युः' इत्येव पाठः। 'असन्' इत्येष प्रमादपाठः" इ. ७ 'च्यवनं' इ. ८ 'पुराणं' ई. ९ 'उच्येते। रजांसि चित्रा वि चरन्ति तन्यव इत्यपि निगमो भवति। हरः°' ओ.

ज्योतिः हरः उच्यते । उदकं हरः उच्यते । लोकाः हरांसि[1] उच्यन्ते[2] । जुहुरे वि चितयन्तः ( ऋ० सं० ५।१९।२) । जुह्विरे विचेतयमानाः । व्यन्तः (४२ ) इत्येषोऽनेककर्मा । पदं देवस्य नमसा व्यन्तः ( ऋ० सं० ६।१।४ ) इति पश्यतिकर्मा । वीहि शूर पुरोळाशम्[3] (ऋ० सं० ३।४१।३ ) । इति खादति-कर्मा । वीतं पातं पयस उस्रियायाः ( ऋ० सं० १।१५३।४ ) । अश्नीतं पिबतं पयसः उस्रियायाः । उस्रिया इति गोनाम । उस्राविण्योऽस्यां[4] भोगाः[5] । [6]त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः । गोभिः क्राणा अनूषत ॥ गोभिः कुर्वाणाः अस्तोषत ( गु० ३ अथवा १९ ) । आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ( ऋ० सं० १०।१०१।१० ) । आसिञ्च हरिं द्रोः उपस्थे । द्रुममयस्य । हरिः सोमो हरितवर्णः । अयमपीतरो हरिः एतस्मादेव । वाशीभिस्तक्षताश्मन्मयीभिः । वाशीभिः अश्ममयीभिः इति वा । वाग्भिः इति वा । स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः (ऋ० सं० ७।२१।५) । स उत्सहतां यो विषुणस्य जन्तोः । विषमस्य । मा शिश्नदेवाः । [7]अब्रह्मचर्याः । शिश्नं श्नथतेः । अपिगुर्ऋतं नः । सत्यं वा यज्ञं वा ( महा० १९ ॥ गु० ४ अथवा २० ) ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि । उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ( ऋ० सं० १०।१०।१० ) । आगमिष्यन्ति तानि उत्तराणि युगानि यत्र जामयः करिष्यन्ति अजामिकर्माणि । जामि अतिरेकनाम । बालिशस्य वा । असमानजातीयस्य वा । [8]उपजनः । उपधेहि वृषभाय बाहुम् । अन्यमिच्छस्व सुभगे पतिं मत् इति व्याख्यातम् ( महा० २० ॥ गु० ५ अथवा २१ ) ॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् । उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ( ऋ० सं० १ ।

---

१ 'हरा' अ. २ 'उच्यन्ते । असृगहनी हरसी उच्येते । प्रत्यग्ने हरसा हरः शृणीहीत्यपि निगमो भवति' । जुहु°' ओ. ३ 'पुरोडाशं' अथवा 'पुरोलाशं' अ. ४ 'उत्स्राविण्यो' ओ. ५ 'भोगाः । उस्रेति च । त्वा°' ओ. ६ 'त्वामिन्द्र °वसूयवः' ई. ७ 'अब्रह्मचर्याः । शिश्नं श्नथतेः' ई. ८ 'मिःउपजनः' इ.

१६४।३३ )॥ द्यौर्मे पिता (४७) । पाता वा । पालयिता वा । जनयिता । नाभिः अत्र । बन्धुर्मे माता पृथिवी महती इयम् । बन्धुः संबन्धनात् । नाभिः संनहनात् । नाभ्या संनद्धा गर्भा जायन्ते इत्याहुः । एतस्मादेव ज्ञातीन् सनाभयः इत्याचक्षते । सबन्धवः इति च । ज्ञातिः संज्ञानात्[1] । उत्तानयोश्चम्वो३र्योनिरन्तः । उत्तानः[2] उत्ततानः ऊर्ध्वतानो वा । तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः । शंयुः (४८) सुखंयुः[3] । अथा नः शं योररपो दधात ( ऋ० सं० १०।१५।४ ) । रपो रिप्रम् इति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् । अथापि शंयुः बार्हस्पत्यः उच्यते । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ( मैत्रा० सं० ४।१३।१० ) इत्यपि[4] निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ( महा० २१ ॥ गु० ६ अथवा २२ इति चतुर्थाध्यायस्य तृतीयः पादः ) ।

अदितिः (४९) अदीना । देवमाता ( महा० २२ ॥ गु० १ अथवा २३ ) ।

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ( ऋ० सं० १।८९।१० )॥ इत्यदितेर्विभूतिमाचष्टे । एनानि[5] अदीनानि इति वा । यमेरिरे भृगवः ( ऋ० सं० १।१४३।४ ) । एरिरे (५०) इति ईर्तिः उपसृष्टोऽभ्यस्तः ( महा० २३ ॥ गु० २ अथवा २४ ) ।

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु । नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् (ऋ०सं०४।३८।५)॥ अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम्[6] । वस्त्रं वस्तेः । तायुः इति स्तेननाम । संस्त्यानम् अस्मिन् पापकम् इति नैरुक्ताः । तस्यतेर्वा स्यात् । अनुक्रोशन्ति क्षितयः संग्रामेषु । भरः इति संग्रामनाम । भरतेर्वा । हरतेर्वा । नीचायमानं नीचैः अयमानम् । नीचैः निचितं भवति । उच्चैः उच्चितं भवति । जस्तमिव श्येनम् । श्येनः शंसनीयं गच्छति । श्रवश्चाच्छा पशुमच्च यूथम् ।

---

१ 'बन्धुः ००संज्ञानात्' ई. २ 'उत्तानः उत्ततानः ऊर्ध्वतानः' ई. ३ 'सुखयुः' ओ । 'सुखंयुः' अथवा 'सुखयुः' ई. ४ 'इत्यपि निगमो भवति' ई. ५ 'एतानि' इ. ६ 'वस्त्रमाथिनं' इ.

अवश्च [1]अपि पशुमच्च यूथम्। प्रशंसां च यूथं च। [2]धनं च यूथं च इति वा। यूथं यौतेः। समायुतं भवति। इन्धान एनं जरते स्वाधीः (ऋ० सं० १०। ४५।१)। गृणाति। मन्दी (५३) मन्दतेः स्तुतिकर्मणः। प्र मन्दिने पितुमदर्चता वचः (ऋ० सं० १।१०१।१)। प्रार्चत मन्दिने पितुमत् वचः। गौः (५४) व्याख्यातः (महा० २४ ॥ गु० ३ अथवा २५)।

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे (ऋ० सं० १।८४।१५)॥ अत्र ह गोः सम[3]भ्रंसत आदित्यरश्मयः [4]स्वं नाम अपीच्यम् अपगतम्। अपचितम्[5]। [6]अपिहितम्। अन्तर्हितं वा। अमुत्र चन्द्रमसो गृहे। गातुः (५५) व्याख्[7]यातः (निरु० ४।२१)। दंसयः (५६) कर्माणि। दंस[8]यन्ति ए[9]नानि। कुत्साय मन्मन्नह्यश्च दंसयः (ऋ० सं० १०। १३८।१)। [10]इत्यपि निगमो भवति। स तूताव नैनमश्नोत्यंहतिः (ऋ० सं० १।९४।२)। स तुताव। नैनम् अंहतिः अश्नोति। अंहतिश्च अंहश्च अंहुश्च हन्तेः नि[11]रूढोपधाद्विपरीतात्। बृहस्पते चयस इत्पियारुम्[12] (ऋ० सं० १।१९०।५)। बृहस्पते यत् चातयसि देवपीयुम्। पीयतिर्हिंसाकर्मा। विद्युते (५९) द्यावापृथिव्यौ। वियवनात्। समान्या वियुते दूरे अन्ते (ऋ० सं० ३।५४।७)। स[13]मानं संमानमात्रं भवति। मात्रा मानात्। दूरं व्याख्यातम्। (निरु० ३।१९)। अन्तः अततेः। ऋधक् (६०) इति पृथग्भावस्य [14]प्रवचनं भवति। अथापि ऋध्नोत्यर्थे दृश्यते। ऋधगया ऋधगुताशमिष्ठाः (कपि० सं० ३।१०)। ऋध्नुवन् अयाक्षीः ऋध्नुवन् अशमिष्ठाः इति च। अस्याः (६१) इति च अस्य (६२) इति च उदात्तं प्रथमादेशेऽनुदात्तम् अन्वादेशे। तीव्रार्थतरम् उदात्तम्। अल्पीयोऽर्थतरम् अनुदात्तम् (गु० ४ अथवा २६)। अस्या ऊ षु ण उप सातये भुवोऽहे[15]ळमानो ररिवाँ अजाँ[16]श्व (ऋ० सं० १।१३८।४)।

---

१ 'अभि' इ. २ 'धनं च यूथं च इति वा' ई. ३ सममन्यन्त' इ. ४ 'सत्' अ। 'स्वं' अथवा 'सत्' ई. ५ 'अपचितम्। अपगतम्' अ. ६ 'अपिहितं' ई. ७ 'व्याख्यातः। गातुं कृण्वन्नुषसो जनायेत्यपि निगमो भवति' ओ. ८ 'दसयन्ते' अ.। 'दसयन्ति' इ. ९ 'तानि' इ. १० 'इत्यपि० भवति' ई. ११ 'निरूल्होपधात्' अ. १२ 'पीयुतिः' अ। पीयतिर्हिंसाकर्मा' ई. १३ 'समानं००अत्तुते;' ई. १४ 'अनुप्रवचनं' सायणः १५ 'अहेलमानः' अ. १६ 'अजाश्व अवस्यतामजाश्व' ओ.

अस्यै नः सातये उपभव अहेळमानः अक्रुध्यन् ररिवान्। [1]रातिः अभ्यस्तः। अजाश्व इति पूषणमाह अजाश्व। अजाः अजनाः। अथानुदात्तम्। दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ( ऋ०सं० १०।८५।३९ )। दीर्घायुः अस्याः यः पतिः [2]जीवतु स शरदः शतम्। शरत् शृता अस्याम् ओषधयो भवन्ति। शीर्णाः आपः इति वा। अस्यै[3] इति अस्याः [4]इत्येतेन व्याख्यातम् ( महा० २५ ॥ गु० ५ अथवा २७ )।

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः। तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ( ऋ० सं० १।१६४।१ )॥ अस्य वामस्य वननीयस्य। पलितस्य पालयितुः। होतुः ह्वातव्यस्य। तस्य भ्राता मध्यमोऽस्ति अशनः। भ्राता [5]भरतेर्हरतिकर्मणः। हरते भागम्। भर्तव्यः भवतीति वा। तृतीयो भ्राता घृतपृष्ठः अस्य अयमग्निः। [6]तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिम्। सप्तपुत्रं सप्तमपुत्रम्। सर्पणपुत्रमिति वा। सप्त सृप्ता संख्या। सप्त आदित्यरश्मय इति वदन्ति[7] (महा० २६ ॥ गु० ६ अथवा २८ )।

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ( ऋ० सं०१।१६४।२)॥ सप्त युञ्जन्ति रथम् एकचक्रम् एकचारिणम्। [8]चक्रं चकतेर्वा। चरतेर्वा। क्रामतेर्वा। एकः अश्वः वहति सप्तनामा आदित्यः। सप्त अस्मै रश्मयो रसानभिसंनामयन्ति। सप्त एनम् ऋषयः स्तुवन्तीति वा। इदमपीतरत् नाम एतस्मादेव। अभिसंनामात्। संवत्सरप्रधान उत्तरोऽर्धर्चः। त्रिनाभि [9]चक्रम्। त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति। संवत्सरः [10]संवसन्तेऽस्मिन् भूतानि। ग्रीष्मः ग्रस्यन्तेऽस्मिन् रसाः। वर्षाः वर्षति आसु पर्जन्यः। हेमन्तः हिमवान्। हिमं पुनः हन्तेर्वा। हिनोतेर्वा। अजरम् [11]अजरणधर्माणम्। अनर्वम् अप्रत्यृतम्

---

१ 'रातिःअभ्यस्तः। अजाश्व इति। पूषणमाह अजाश्व' ई. २ 'जीवातु' इ. ३ 'अस्या अस्येत्येतेन' अ. ४ 'अनेन' इ. ५ 'भरतेर्हरतिकर्मणः' ई. ६ 'तत्रापश्यं विश्पतिं सर्वस्य पालयितारम्। सप्त°' ई. ७ 'मन्यन्ते' इ. ८ 'चक्रं°क्रामतेर्वा' ई. ९ 'चक्रम्। चक्रं चकतेर्वा। चरतेर्वा। क्रामतेर्वा। त्र्यृतुः°' इ. १० 'संवसन्ति' इ. ११ 'अमरणधर्माणं' क। 'अजरणधर्मि' इ.

अन्यस्मिन् । यत्र इमानि सर्वाणि भूतानि अभिसंतिष्ठन्ते । तं संवत्सरं सर्वमात्राभिः स्तौति । पञ्चारे चक्रे परि वर्तमाने ( ऋ० सं० १।१६४।१३ ) । इति पञ्चर्तुतया[1] । पञ्चर्तवः संवत्सरस्य इति च ब्राह्मणम् । हेमन्तशिशिरसमासेन[2] । षळर आहुरर्पितम् (ऋ०सं० १।१६४।१२ )। इति षळृतुतया[3] । अराः प्रत्यृताः नाभौ । षट् पुनः सहतेः । द्वादशारं न हि तज्जराय ( ऋ० सं० १।१६४।११ ) द्वादश प्रधयश्चक्रमेकम् ( ऋ० सं० १।१६४।४८ ) इति मासानाम् । मासाः मानात् । प्रधिः प्रहितः भवति । तस्मिन्त्साकं त्रिंशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ( ऋ० सं० १।१६४।४८) । षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणम् । समासेन । सप्त शतानि विंशतिश्च तस्थुः (ऋ० सं०१।१६४।११) । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणम् (ऐत. आर. ३।२।१) । विभागेन विभागेन (महा० २७ ॥ गु० ७ अथवा २९ इति चतुर्थाध्यायस्य चतुर्थः पादः ) ।

इति निरुक्ते पूर्वषट्के चतुर्थोऽध्यायः ।

---

१ 'पञ्चर्तुतायाः' अ. । उत्तमप्रवृत्ति पुस्तके च. २ 'शिशिरयोः समासेन' ओ. ३ 'षड्तु' अथवा 'षळृतुतायाः' अ.

# पञ्चमोऽध्यायः ।

हरिःॐ । सस्निमविन्दच्चरणे नदीनाम् ( ऋ० सं० १०।१३९।६ )। संस्नातं मेघम् । वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ( ऋ० सं० ८।२६।१६) । वोळ्हृतमः ह्वानानां स्तोमः दूतः हुवत् नरौ । नराः मनुष्याः । नृत्यन्ति कर्मसु । दूतः ( निघ० ४।२।३ ) जवतेर्वा । द्रवतेर्वा । वारयतेर्वा । वावशानः (४) वष्टेर्वा । वाश्यतेर्वा । सप्त स्वसॄररुषीर्वावशानः ( ऋ० सं० १०।५।५ ) इत्यपि निगमो भवति । वार्यं (५) वृणोतेः । अथापि वरतमम् । तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ( ऋ० सं० ८।२५।१३ ) । तत् वार्यं वृणीमहे वर्षिष्ठं गोपायितव्यम् । गोपायितारो यूयं स्थ । युष्मभ्यम् इति वा । अन्धः (६) इति अन्ननाम । आध्यानीयं भवति । आमत्रेभिः सिञ्चता मद्यमन्धः ( ऋ० सं० २।१४।१ ) । आसिञ्चत अमत्रैः मदनीयम् अन्धः । अमत्रं पात्रम् । अमा अस्मिन् अदन्ति । अमा पुनः अनिर्मितं भवति पात्रं पानात् । तमोऽपि अन्धः उच्यते । न अस्मिन् ध्यानं भवति । न दर्शनम् । अन्धंतमः इत्यभिभाषन्ते । अयमपीतरः अन्धः एतस्मादेव । पश्यदक्षण्वान्न वि चेतदन्धः ( ऋ० सं० १।१६४।१६ ) । इत्यपि निगमो भवति (१) ।

असश्चन्ती भूरिधारे पयस्वती ( ऋ० सं० ६।७०।२ ) । असज्यमाने इति वा । अव्युदस्यन्त्यौ इति वा । बहुधारे । उदकवत्यौ । वनुष्यन्तिः (८) हन्तिकर्मा । अनवगतसंस्कारो भवति । वनुयाम वनुष्यतः ( ऋ० सं० ८।४०।७ ) इत्यपि निगमो भवति । दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ( ऋ० सं० ७।८२।१ ) । दीर्घप्रततयज्ञम् अभिजिघांसति

---

१ 'वाढृतमः' अथवा 'वोल्हृतमः' अ. २ 'वारयतेर्वा । दूतो देवानामसि मर्त्यानामित्यपि निगमो भवति' ओ. ३ 'इत्यपि निगमो भवति' ई. ४ 'वर्षिष्ठं' ई. ५ 'गोपितारौ' अ. ६ 'मद्यम्' अ. ७ 'अयमपी० एतस्मादेव' ई. ८ 'असज्य० दस्यन्तौ इति वा' इदं दुर्गस्वीकृतपाठे प्रथमखण्डस्यान्ते वर्तते,

यो वयं तं जयेम पृतनासु । दूढ्यं दुर्धियं पापधियम् । पापः पाता अपेयानाम् । पापत्यमानः अवाङेव पततीति वा । पापत्यतेर्वा स्यात् । तरुष्यतिः ( ९ ) अपि एवंकर्मा । इन्द्रेण युजा तरुषेम वृत्रम् (ऋ० सं० ७।४८।२ )। इत्यपि निगमो भवति । भन्दना (१०) भन्दतेः स्तुतिकर्मणः । पुरुप्रियो भन्दते धामभिः कविः ( ऋ० सं० ३।३।४ ) इत्यपि निगमो भवति । स भन्दना उदियर्ति प्रजावतीः ( ऋ० सं० ९।८६।४१ ) इति च । अन्येन मदाहनो याहि तूयम् ( ऋ० सं० १०।१०।८ ) । अन्येन मत् अहनः गच्छ क्षिप्रम् । आहंसि इव भाषमाणा इति असभ्यभाषणात् आहनाः इव भवति । एतस्मात् आहनः स्यात् । ऋषिः नदः भवति । नदतेः स्तुतिकर्मणः । नदस्य मा रुधतः कामः आगन् ( ऋ० सं० १।१७९।४ ) । नदनस्य मा रुधतः कामः आगमत् । संरुद्धप्रजननस्य ब्रह्मचारिणः । इति ऋषिपुत्र्या विलपितं वेदयन्ते (२)।

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ( ऋ० सं० १०।८९।६ ) । अश्नोतेः इत्येके । अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः ( ऋ० सं० ९।१०७।९ ) । लोपाशः सिंहं प्रत्यञ्चं-मत्साः ( ऋ० सं० १०।२८।४ ) । क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके । अनुपे गोमान् गोभिः यदा क्षियति अथ सोमो दुग्धाभ्यः क्षरति । सर्वे क्षियतिनिगमा इति शाकपूणिः । श्वात्रम् (१४) इति क्षिप्रनाम । आशु अतनं भवति । स पतत्रीत्वरंस्था जगद्यच्छ्वात्रमग्निरकरोज्जातवेदाः ( ऋ० सं० १०।८८।४ ) । स पतत्रि च इत्वरं स्थावरं जंगमं च यत् तत् क्षिप्रम् अग्निः अकरोत् जातवेदाः । ऊतिः (१५) अवनात् । आ त्वा रथं यथोतये ( ऋ० सं० ८।६८।१ ) । इत्यपि निगमो भवति । हासमाने (१६) इत्युपरिष्टात् ( निरु० ९।३९ ) व्याख्यास्यामः ( गु० ३ ) । वम्रकः पड्भिरुप-

---

१ 'दूढ्यः दुर्धियः पापधियः' इ. २ 'पापच्यमानः' अ. ३ 'पापत्यतेर्वा स्यात्' ई. ४ 'इत्यपि निगमो भवति' ई. ५ 'आहनः' इ. ६ 'याहि' इ. ७ 'असभ्यं भाषमाणा' इ. ८ 'असभ्य-भाषणात्' ई. ९ 'आहनस्यात्' इ. १० 'आगमत्' ई. ११ '°यन्ते । सोमो अक्षाः' इ. १२ 'लोपाशः सिंहं प्रत्यञ्चमत्साः' ई. १३ 'इत्वरं च' इ. १४ 'स्थावरं च' इ. १५ 'आत्मसात् अकरोत्' इ. १६ 'इत्यपि निगमो भवति' ई.

सर्पदिन्द्रम् ( ऋ० सं० १०।९९।१२ )। पानैः इति वा। स्पाशनैः इति वा[1]। सुसं न पक्वमविदच्छुचन्तम् ( ऋ० सं० १०।७९।३ )। स्वपनम्[2] एतत्[3] माध्यमिकं[4] ज्योतिः अनित्यदर्शनम्। तदिव अविदत् जाज्वल्यमानम्[5]। द्विता च सत्ता स्वधया च शंभुः ( ऋ० सं० ३।१७।५ )। द्वैधं सत्ता मध्यमे च स्थाने उत्तमे च। शंभुः सुखभूः। सृगं न व्रा सृगयन्ते ( ऋ० सं० ८।२।६ )। मृगमिव व्रात्याः प्रैषाः ( महा० ३ )।

वराहः[6] (२१) मेघो[7] भवति। वराहारः[8]। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहं तिरो अद्रिमस्ता[9] ( ऋ० सं० १।६१।७ ) इत्यपि निगमो भवति। अयमपीतरो वराहः एतस्मादेव[10]। वृहति[11] मूलानि। वरं[12] वरं मूलं वृहतीति वा। वराहमिन्द्र एमुषम् ( ऋ० सं० ८।७७।१० ) इत्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते। ब्रह्मणस्पतिर्वृषभिर्वराहैः ( ऋ० सं १०।६७।७ )। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते। पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ( ऋ० सं० १।८८।५ ) ( गु० ४ )। स्वसराणि ( २२ ) अहानि भवन्ति[13]। स्वयंसारीणि। अपि वा स्वर् आदित्यो भवति[14]। स एनानि[15] सारयति। उस्रा इव स्वसराणि ( ऋ० सं० १।३।८ ) इत्यपि निगमो भवति। शर्याः[16] ( २३ ) अङ्गुलयो भवन्ति[17] सृजन्ति कर्माणि। शर्याः इषवः। शरमय्यः। शरः शृणातेः। शर्याभिर्न भरमाणो गभस्त्योः ( ऋ० सं० ९।११०।५ ) इत्यपि निगमो भवति। अर्कः ( २४ ) देवो भवति[18]। यत् एनम् अर्चन्ति। अर्को मन्त्रो भवति। यत् अनेन अर्चन्ति। अर्कम् अन्नं भवति। अर्चति भूतानि। अर्को वृक्षो भवति। स वृतः कटुकिम्ना ( महा० ४॥ गु० ५ )।

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत

१ 'वा। स्पर्शनैः इति वा' ओ. २ 'स्वप्नम्' अ. ३ 'एतत्' ई. ४ 'मध्यं' अ. ५ 'जाज्वल्यमानं' ई. ६ 'वराहो० ब्राह्मणम्' इदं दुर्गस्वीकृतपाठे तृतीयखण्डस्यान्ते वर्तते. ७ 'मेघः। वराहारो भवति' इ. ८ 'वराहारः। विध्यद्वराहं' ओ. ९ 'इत्यपि निगमो भवति' ई. १० 'एतस्मादेव। वरमाहारमाहार्षीरिति च ब्राह्मणं' ओ. ११ 'बृहति' अ. १२ 'वरं' क. १३ 'भवन्ति' ई. १४ 'भवति' ई. १५ 'एतानि' क. १६ 'शर्या० कर्माणि' ई. १७ 'भवन्ति। शर्याः इषवः' ओ. १८ 'भवति' ई.

उद्वंशमिव येमिरे (ऋ० सं १।१०।१ )॥ गायन्ति त्वा गायत्रिणः। प्रार्चन्ति ते[1] अर्कम् अर्किणः। ब्राह्मणाः त्वा शतक्रतो उद्येमिरे वंशम् इव। वंशः वनशयो भवति। वननात् श्रूयते इति वा। पविः (२५) रथनेमिः भवति। यत् विपुनाति भूमिम्। उत पव्या रथानामद्रिं भिन्दन्त्योजसा (ऋ० सं० ५।५२।९ )। तं मरुतः क्षुरपविना व्ययुः ( मै० सं ० १।१०।१४ ) इत्यपि[3] निगमौ भवतः। वक्षः (२६) व्याख्यातम् ( निरु० ४।१६ )। धन्व (२७) अन्तरिक्षम्। धन्वन्ति अस्मात् आपः। तिरो धन्वातिरोचते (ऋ० सं० १०।१८७।२ ) इत्यपि निगमो भवति। सिनम् (२८) अन्नं भवति। सिनाति भूतानि। येन स्मा सिनं भरथः सखिभ्यः (ऋ० सं० ३।६२।१) इत्यपि[4] निगमो भवति। इत्था (२९) अमुथा ( निरु० ३।१६ ) इत्येतेन १
व्याख्यातम्[5]। सचा (३०) सहेत्यर्थः[6]। वसुभिः सचाभुवा (ऋ० सं० ८।३५।१ ) वसुभिः सहभुवौ। चित् (३१) इति निपातोऽनुदात्तः पुरस्तात् (निरु० १।४) एव व्याख्यातः। अथापि[7] पशुनाम इह भवति उदात्तः। चिदसि मनासि ( मैत्रा० सं० १।२।४ )। चित्ताः[8] त्वयि भोगाः। चेतयसे इति वा। आ (३२) इति आकार उपसर्गः पुरस्तात् ( निरु० १।३ ) एव व्याख्यातः। १
अथापि अध्यर्थे दृश्यते। अभ्र आँ अपः ( ऋ० सं० ५।४८।१ )। अभ्रे[9] आ अपः। अपोऽभ्रेऽधीति[10]। द्युम्नं (३३) द्योततेः। यशो वा। अन्नं वा। अस्मे द्युम्नमधि रत्नं च धेहि ( ऋ० सं० ७।२५।३ )। अस्मासु द्युम्नं च[11] रत्नं च धेहि महा०५॥ गु० ६ इति पञ्चमाध्यायस्य प्रथमः पादः )।

पवित्रं (३४) पुनातेः। मन्त्रः पवित्रम् उच्यते। येन देवाः पवित्रेणात्मानं पुनते सदा। इत्यपि निगमो भवति। रश्मयः पवित्रम् उच्यन्ते। गभस्तिपूतः[12] ( मैत्रा० सं० १।३।४॥ ऋ० सं० ९।८६।३४ ) इत्यपि निगमो २

१ 'भ' ई. २ 'ते' ई. ३ 'इत्यपि निगमौ भवतः' ई. ४ 'इत्यपि निगमो भवति' ई. ५ 'व्याख्यतः' इ. ६ 'इत्यर्थः' इ. ७ अथापि उदात्तः। पशुनाम भवति इ. ८ 'चिता त्वयि भोगाः। चेतयसे इति वा' ई. ९ 'अभ्र' अ. १० 'अपोऽभ्रेऽध्यध इति' अ. ११ 'च' ई. १२ 'गभस्तिपूतो नृभिरद्रिभिः सुतः' ओ.

भवति ( खैलिक १७।३ )। आपः पवित्रम् उच्यन्ते। शतपवित्राः स्वधया मदन्तीः ( ७।४७।३ )। बहूदकाः[1]। अग्निः पवित्रम् उच्यते। वायुः पवित्रम् उच्यते। सोमः पवित्रम् उच्यते। सूर्यः पवित्रम् उच्यते। इन्द्रः पवित्रम् उच्यते। अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः। पवित्रं ते मा पुनन्तु। इत्यपि निगमो भवति। तोदः (३५) तुद्यतेः ( महा० ६॥ गु० १ अथवा ७ )।

पुरु त्वा दाश्वान्वोचे[2]ऽरिरग्ने तव स्विदा। तोदस्येव शरण आ महस्य ( ऋ० सं० १।१५०।१ )॥ बहु दाश्वान् त्वामेव अभिह्वयामि। अरिः अमित्रः। ऋच्छतेः। ईश्वरोऽपि अरिः एतस्मादेव। यदन्यदेवत्या अग्नावाहुतयो हूयन्ते इत्येतद्दृष्ट्वा एवमवक्ष्यत्। तोदस्येव शरण आ महस्य। तुदस्येव[3] शरणे अधि महतः। स्वञ्चाः (३६) सु अञ्चनः। आजुह्वानो घृतपृष्ठः स्वञ्चाः ( ऋ० सं० ५।३७।१ ) इत्यपि[4] निगमो भवति। शिपिविष्टः (३७) विष्णुः इति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ( महा० ७॥ गु० २ अथवा ८ )।

किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ( ऋ० सं० ७।१००।६)॥ किं ते विष्णोऽप्रख्यातम्[5] एतत् भवति अप्रख्यापनीयं[6] यत् नः प्रब्रूषे शेपः इव निर्वेष्टितः अस्मि इति। अप्रतिपन्नरश्मिः। अपि वा। प्रशंसानाम एव अभिप्रेतं स्यात्। किं ते विष्णो प्रख्यातम्[7] एतत् भवति प्रख्यापनीयं यत् उत प्रब्रूषे शिपिविष्टः अस्मि इति। प्रतिपन्नरश्मिः। शिपयः अत्र रश्मय उच्यन्ते। तैः आविष्टः भवति। मा वर्पो अस्मदप गूह एतत्। वर्प[8] इति रूपनाम वृणोति इति सतः। यत् अन्यरूपः समिथे संग्रामे भवसि। संयतरश्मिः। तस्योत्तरा भूयसे निर्वचनाय ( महा० ८॥ गु० ३ अथवा ९ )।

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्। तं

---

१ 'बहूदकाः' ई. २ 'अवक्षत्' ओ.। अवोचत्' इ. ३ 'तुन्नस्येव' इ. ४ 'इत्यपि निगमो भवति' ई. ५ 'अप्रख्यातं' ई. ६ 'परिख्यापनीयं' इ. ७ 'प्रख्यातं' ई. ८ 'वर्पः°सतः' ई.

त्वां गृणासि तवसमतव्यान्क्षयन्तमस्य रजसः पराके (ऋ० सं० ७।१००।
५ ) ॥ तत्ते अद्य शिपिविष्ट नाम अर्यः प्रशंसामि । अर्यः अहम् अस्मि ईश्वरः
स्तो[1]मानाम् । अर्यः त्वम् असि इति वा । तं त्वा स्तौमि तवसम् अतव्यान् ।
[2]तवसः ( निघ० ३।३।६ ) इति महतो नामधेयम् । उदितो भवति । निवस-
न्तम् अस्य रजसः पराके पराक्रान्ते । आघृणिः (३९) आगतहृणिः । आघृणे
सं सचावहै ( ऋ० सं० ६।५५।१ ) । आगतहृणे संसेवावहै । पृथुज्रयाः
(४०) पृथुजवः । पृथुज्रया अमिनादायुर्दस्योः ( ऋ० सं० ३।४९।२ )
[3]प्रामापयत् आयुः द[4]स्योः ( महा० ९ ॥ गु० ४ अथवा १० ) ।

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरे-
दृशं गृहपतिमथर्युम् ( ऋ० सं० ७।१।१ ) ॥ दीधितयः ( निघ० २।५।२१) १
अङ्गुलयो भवन्ति । धीयन्ते कर्मसु । अरणी । प्रति ऋतः एने अग्निः ।
समरणात् जायते इति वा । हस्तच्युती हस्तप्रच्युत्या । जनयन्त प्रशस्तं दूरे-
दर्शनं गृहपतिम् अतनवन्तम् ( महा० १० ॥ गुरु० ५ अथवा ११ ) ।

एकया प्रतिधा पिबत्साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य
काणुका ( ऋ० सं० ८।७७।४ ) ॥ एकेन [5]प्रतिधानेन अपि[6]बत् साकम् । १
सहेत्यर्थः । इन्द्रः सोमस्य काणुका ( ४२ ) कान्तकानि इति वा । क्रान्त-
कानि इति वा । कृतकानि इति वा । इन्द्रः सोमस्य कान्तः इति वा । कणे-
[7]घातः इति वा । कणेहतः कान्तिहतः । तत्रैतद्याज्ञिका वेदयन्ते । त्रिंशत् उक्थ-
पात्राणि माध्यंदिने सवने एकदेवतानि । तान्येतस्मिन् काले एकेन प्रति[8]धानेन
[9]पिबन्ति । तान्यत्र सरांसि उच्यन्ते । त्रिंशत् अपरपक्षस्य अहोरात्राः त्रिंशत् पूर्व- २
पक्षस्य इति नैरुक्ताः । तत् या एताः चान्द्रमस्यः आगामिन्यः आपो भवन्ति
रश्मयः ता अपरपक्षे पिबन्ति । तथापि निगमो [10]भवति । य[11]मक्षितिमक्षितयः

१ 'स्तुतीनां' इ. २ 'तवसः °भवति' ई. ३ 'प्रामापयत्' ई. ४ 'दस्योः । अधर्युम् । अतनवान्' इ. ५ 'प्रणिधानेन' एकस्मिन्वृत्तिपुस्तके. ६ 'पिबति' इ. ७ 'आकणेघातं' इ । 'इति घा' ई. ८ 'प्रणिधानेन' एकस्मिन् वृत्तिपुस्तके. ९ 'पीयन्ते' इ. १० 'भवति' ई. ११ 'यथाक्षिति०' ऐ । दुर्गो 'यमक्षिति०' इति पाठान्तरमपि ददाति.

पिबन्ति ( मैत्रा० सं० २।२।७ ) इति । तं पूर्वपक्षे आप्याययन्ति । तथापि निगमो भवति । यथा देवा अंशुमाप्याययन्ति ( मैत्रा० सं० २।२।७ ), इति ( गु० ६ अथवा १२ ) । अध्रिगुः (४३) मन्त्रो भवति । गवि अधिकृतत्वात् । अपि वा । [1]प्रशासनमेवाभिप्रेतं स्यात् । तच्छब्दवत्त्वात् । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो ( मैत्रा० सं० ४।१३।४ ) इति । अग्निः अपि अध्रिगुः उच्यते । तुभ्यं चोतन्त्यध्रिगो शचीवः ( ऋ० सं० ३।२१।४ ) । अधृतगमन कर्मवन् । इन्द्रः अपि अध्रिगुः उच्यते । अध्रिगव ओहमिन्द्राय (ऋ० सं० १।६१।१ ) [2]इत्यपि निगमो भवति । आङ्गूषः (४४) स्तोमः । आघोषः । एनाङ्गूषेण वयमिन्द्रवन्तः (ऋ० सं० १।१०५।१९ )। अनेन स्तोमेन वयम् इन्द्रवन्तः ( महा० ११ ॥ गु० ७ अथवा १३ ) ।

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी । सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ( ऋ० सं० १०।८९।५ ) ॥ [3]आपातितमन्युः । तृप्रप्रहारी क्षिप्रप्रहारी वा[4] । सोमो वा इन्द्रो वा । धुनिः [5]धूनोतेः [6]शिमी ( निघ० २।१।२४ ) इति कर्मनाम । शमयतेर्वा । शक्नोतेर्वा । ऋजीषी सोमः । यत्सोमस्य पूयमानस्यातिरिच्यते तत् ऋजीषम् । अपार्जितं भवति । तेन ऋजीषी सोमः । अथापि ऐन्द्रो निगमो भवति । ऋजीषी वज्री ( ऋ० सं ५।४०।४ ) इति । हर्योः अस्य स भागः । धानाश्च इति । धानाः भ्राष्ट्रे हिता भवन्ति । फले हिता भवन्तीति वा[7] । बब्धां ते हरी धाना उप ऋजीषं जिघ्रताम् ( प्रैष० ६६ ) इत्यपि निगमो भवति । आदिना अभ्यासेन उपहितेन उपधाम् आदत्ते बभस्तिः अत्तिकर्मा । सोमः सर्वाणि अतसानि वनानि । न अर्वाक् इन्द्रं प्रतिमानानि दभ्नुवन्ति । यैः[8] एनं प्रतिमिमते नैनं तानि दभ्नुवन्ति । अर्वागेव एनम् अप्राप्य विनश्यन्ति इति । इन्द्रप्रधाना इत्येके । नैघण्टुकं सोमकर्म । [9]उभयप्रधाना इत्यपरम्[10] ।

---

१ 'प्रशंसानामैवा०' अ. २ 'इत्यपि निगमो भवति' ई. ३ 'आपादित' इ. ४ 'क्षिप्रप्रहारी तृप्रप्रहारी' ओ. । 'क्षिप्रप्रहारी' आ. ५ 'धूनोतेः' ई. ६ 'शिमी०० शक्नोतेर्वा' ई. ७ 'वा । खले हिता भवन्तीति वा' इ. ८ ' यैः प्रतिमीयते' इ. ९ 'इति उभयप्रधाना' इ. १० 'उभय००इत्यपरं' ई.

श्मशा (४६) शु अश्नुते इति वा । श्म अश्नुते इति वा । अर्व श्मशा रुधद्वाः (ऋ० सं० १०।१०५।१ )। अवारुधत् श्मशा वार् इति ( महा० १२॥ गु० ८ अथवा १४ इति पञ्चमाध्यायस्य द्वितीयः पादः ) ।

उर्वशी (४७) अप्सराः । उरु अभि अश्नुते । ऊरुभ्याम् अश्नुते । उरुः वा वशः अस्याः । अप्सराः अप्सारिणी । अपि वा । अप्सः ( निघ० ३।७।६ ) इति रूपनाम । अप्सातेः । अप्सानीयं भवति । आदर्शनीयम् । व्यापनीयं वा । स्पष्टं दर्शनाय इति शाकपूणिः । यदप्सः ( काठक सं० ९।४ ) इति अभक्षस्य । अप्सो नाम ( मैत्रा० सं० २।८।१ ) इति व्यापिनः । तद्रा भवति । रूपवती । तत् अनया आत्तम् इति वा । तत् अस्यै दत्तम् इति वा । तस्य दर्शनान्मित्रावरुणयोः रेतः चस्कन्द । तदभिवादिनी एषा ऋक् भवति । ( महा० १३ ॥ गु० १ अथवा १५ ) ।

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधि जातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वा ददन्त ( ऋ० सं० ७।३३।-११ ) ॥ अपि असि मैत्रावरुणः वसिष्ठ । उर्वश्याः ब्रह्मन् मनसः अधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन । द्रप्सः संभृतः प्सानीयः भवति । सर्वे देवाः पुष्करे त्वा अधारयन्त । पुष्करम् अन्तरिक्षम् । पोषति भूतानि । उदकं पुष्करम् । पूजाकरम् । पूजयितव्यम् । इदमपीतरत् पुष्करम् एतस्मादेव पुष्करम् । वपुष्करं वा । पुष्पं पुष्पतेः । वयुनम् (४८) वेतेः । कान्तिर्वा । प्रज्ञा वा ( महा० १४ ॥ गु० २ अथवा १६ ) ।

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ( ऋ० सं० ६।२१।-३ ) । स तमः अप्रज्ञानं ततन्वत् । स तं सूर्येण प्रज्ञानवत् चकार । वाजपस्त्यं (४९) वाजपतनम् । सनेम वाजपस्त्यम् ( ऋ० सं० ९।९८।१२ ) इत्यपि निगमो भवति । वाजगन्ध्यं (५०) गध्यत्युत्तरपदम् । अश्याम वाजगन्ध्यम् ( ऋ० सं० ९।९८।१२ ) इत्यपि निगमो भवति । गध्यं (५१)

१ 'श्याशिनी इति वा' इ. २ 'श्माशिनी इति वा' इ. ३ 'अवारुधत्' ई. ४ 'अश्नुत इति वा' इ. ५ 'त्वां' इ. ६ 'पुष्णाति' इ. ७ 'पूजायितव्यं वा' इ. ८ 'पुष्यतेः' अ. ९ 'इत्यपि निगमो भवति' ई.

गृण्हातेः । ऋज्रा वाजं न गध्यं युयूषन् ( ऋ० सं० ४।१६।११ ) इत्यपि निगमो भवति । गध्यतिः (५२) मिश्रीभावकर्मा । आगधिता परिगधिता ( ऋ० सं० १।१२६।६ ) इत्यपि निगमो भवति । कौरयाणः (५३) कृतयानः । पाकस्थामा कौरयाणः ( ऋ० सं० ८।३।२१ ) इत्यपि निगमो भवति । तौरयाणः (५४) तूर्णयानः । स तौरयाण[2] उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः । इत्यपि निगमो भवति । अह्रयाणः (५५) अह्रीतयानः । अनुष्ठुया कृणुह्यह्रयाण ( ऋ० सं० ४।४।१४ ) इत्यपि[1] निगमो भवति । हरयाणः (५६) हरमाणयानः । रजतं हरयाणे ( ऋ० सं० ८।२५।२२ ) इत्यपि निगमो भवति । य आरितः कर्मणिकर्मणि स्थिरः ( ऋ० सं० १।१०१।४ ) । प्रत्यृतः स्तोमान् । व्रन्दी (५८) व्रन्दतेर्मृदूभावकर्मणः ( महा० १५ ॥ गु० ३ अथवा १७ ) ।

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रन्दिनो रोरुवद्वन- ( ऋ० सं० १।५४।५ ) । निवृणाक्षि यत् श्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्य आदित्यस्य च[3] शोषयितुः रोरूयमाणः[4] वनानि इति वा । वधेन[5] इति वा अव्रदन्त वीळिता ( ऋ० सं० २।२४।३ ) इत्यपि निगमो भवति । वीळयतिश्च[6] व्रीडयतिश्च[7] संस्तम्भकर्माणौ पूर्वेण संप्रयुज्येते । निष्षपी (५९) स्त्रीकामो भवति । विनिर्गतपसाः । पसः पसतेः[8] स्पृशतिकर्मणः । मा नो मघेव निष्षपी परा दा ( ऋ० सं० १।१०४।५ ) । स यथा धनानि विनाशयति मा नः त्वं तथा परादाः । तूर्णाशम् (६०) उदकं भवति । तूर्णम् अश्नुते । तूर्णाशं न गिरेरधि ( ऋ० सं० ८।३२।४ ) इत्यपि निगमो भवति । क्षुम्पम् (६१) अहिच्छत्रकं भवति । यत् क्षुभ्यते ( महा० १६ ॥ गु० ४ अथवा १८ ) ।

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् । कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ( ऋ० सं० १।८४।८ ) ॥ कदा मर्तम् अनाराधयन्तं पादेन[9]

---

१ 'इत्यपि निगमो भवति' ई. २ 'तूरयाण' अ. ३ 'च' आ । 'अपि' इ. ४ 'रोरूयमाणः' ई. ५ 'धनानि' सायणस्वीकृतपाठः. ६ 'वीलयतिश्च' अ. ७ 'व्रीडयतिश्च' अ. ८ 'स्पशतेः' अ. ९ 'लोकः पादेन' दुर्गदत्तं पाठान्तरम्.

क्षुम्पम् इव अवस्फुरिष्यति[1] । कदा नः श्रोष्यति[2] च गिरः इन्द्रः अङ्गः । अङ्ग[3] इति क्षिप्रनाम । अञ्चितम् एव अङ्कितं भवति । निचुम्पुणः ( ६२ ) सोमः[4] । निचान्तपृणः[5] निचमनेन प्रीणाति ( महा० १७ ॥ गु० ५ अथवा १९ ) ।

पत्नीवन्तः सुता इमे उशन्तो यन्ति वीतये । अपां जग्मिर्निचु- म्पुणः ( ऋ० सं० ८।९३।२२ ) ॥ पत्नीवन्तः सुता इमे अद्भिः सोमाः कामयमानाः यन्ति वीतये पानाय । अपां गन्ता निचुम्पुणः । समुद्र : अपि निचुम्पुणः उच्यते । निचमनेन पूर्यते । अवभृथः अपि निचुम्पुणः उच्यते । नीचैः अस्मिन् क्वणन्ति । नीचैः दधति इति वा । अवभृथ निचुम्पुण ( वाज० सं० ८।२७ ) इत्यपि[6] निगमो भवति । निचम्पुणं[7] निचुङ्कुण इति च । पदिः ( ६३ ) गन्तुर्भवति । यत्पद्यते ( महा० १८ ॥ गु० ६ अथवा २० ) । १

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति । यस्त्वा यन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ( ऋ० सं० १।१२५। २ ) ॥ सुगुः भवति । सुहिरण्यः । स्वश्वः । महच्च अस्मै वयः इन्द्रो दधाति । यः त्वा यन्तम् अन्नेन प्रातरागामिन् अतिथे । मुक्षीजयेव पदिमुत्सिनाति । १
कुमारः । मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च । पादुः ( ६४ ) पद्यतेः । आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ( ऋ० सं० १०।२७।२४ ) । आविष्कुरुते[8] भासम्[9] आदित्यः । गूहते बूसम् । बुसम् ( निघ० १।१२।२० ) इति उदकनाम । ब्रवीतेः शब्दकर्मणः । भ्रंशतेर्वा[10] । यत् वर्षन् पातयति उदकं रश्मिभिः[11] तत् प्रत्यादत्ते ( महा० १९ ॥ गु० ७ २
अथवा २१ इति पञ्चमाध्यायस्य तृतीयः पादः ) ।

वृकः ( ६५ ) चन्द्रमाः भवति । विवृतज्योतिष्को वा । विकृतज्योतिष्को वा । विक्रान्तज्योतिष्को वा ( महा० २० ॥ गु० १ अथवा २२ ) ।

---

१ 'अवस्फुरसि' दुर्गदत्तं पाठान्तरम्. २ 'शृणोति' अ । दुर्गदत्तं पाठान्तरं च । अस्मिन् पाठान्तरे 'शृणोति' इत्यस्यानन्तरं 'च' नास्ति. ३ 'अङ्ग° भवति' इ. ४ 'सोमो भवति' इ. ५ 'निचान्तः' इ. ६ 'इत्यपि निगमो भवति' ई. ७ 'निचुम्पुण निचुङ्कुण इति च' ई. ८ 'आविः °कुरुते' ओ. ९ 'भासा' इ. १० 'भ्रंसतेर्वा' ओ. ११ 'तत् रश्मिभिः' इ.

अ॒रु॒णो मा॒सकृद्वृकः॑ प॒था य॒न्तं द॒दर्श॒ हि। उज्जि॑हीते नि॒चाय्या॒ तष्टे॑व पृष्ट्याम॒यी वि॒त्तं मे॑ अ॒स्य रोद॑सी ( ऋ० सं० १।१०५।१८ )॥ अरुणः आरोचनः। मासकृत् मासानां चार्धमासानां च कर्ता[1]। चन्द्रमाः वृकः। पथा यन्तं ददर्श नक्षत्रगणम्। अभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमाः। तक्ष्णुवन् इव पृष्ठरोगी। जानीतं मे अस्य द्यावापृथिव्यौ[2] इति। आदित्यः अपि वृकः उच्यते। यत् आवृङ्क्ते ( गु० २ अथवा २३ )। अजो॑हवीदश्विना॒ वर्ति॑का वामा॒स्नो यत्सी॒ममु॑ञ्चतं॒ वृक॑स्य ( ऋ० सं० १।११७।१६ )। आव्हयत्[3] उषाः अश्विनौ आदित्येन अभिग्रस्ता। तामश्विनौ प्रमुमुचतुः[4] इत्याख्यानम्[5]। श्वा अपि वृकः उच्यते। विकर्तनात्। वृक॑श्चिदस्य वार॒ण उ॑रा॒मथिः॑ ( ऋ० सं० ८।६६।८ )। उरणमथिः। उरणः ऊर्णावान् भवति[6]। ऊर्णा पुनः वृणोतेः। ऊर्णोतेर्वा। वृद्धवाशिनी अपि वृकी उच्यते। श॒तं मे॒षान्वृ॒क्यै॑ चक्षदा॒नमृ॒ज्राश्वं॒ तं पि॒तान्धं॑ चकार ( ऋ० सं० १।११६।१६ ) इत्यपि निगमो भवति[7]। जोषवाकम् ( ६६ ) इति अविज्ञातनामधेयम्[8][9]। जोषयितव्यं भवति ( महा० २१॥ गु० ३ अथवा २४ )

य इ॑न्द्राग्नी सु॒तेषु॑ वां॒ स्तव॒त्तेष्वृ॑तावृधा। जो॒ष॒वा॒कं वद॑तः पज्रहोषिणा॒ न दे॑वा भ॒सथ॑श्चन ( ऋ० सं० ६।५९।४ )॥ यः इन्द्राग्नी सुतेषु वां सोमेषु स्तौति[10] तस्याश्नीथः। अथ योऽयं जोषवाकं वदति विजज्ञपः[11] प्रार्जितहोषिणौ न देवौ तस्याश्नीथः। कृत्तिः ( ६७ ) कृन्ततेः। यशो वा[12]। अन्नं वा। म॒हीव॒ कृत्तिः॑ श॒रणा॑ त॒ इन्द्र ( ऋ० सं० ८।९०।६ )। सुमहत्[13] ते इन्द्र शरणम् अन्तरिक्षे[14] कृत्तिः इव इति[15] इयमपीतरा कृत्तिः एतस्मादेव। सूत्रमयी[16]। उपमार्थे वा। कृत्तिवासाः[17] पिनाकहस्तोऽवततधन्वा ( काठक सं० ९।८ ) इत्यपि निगमो भवति। श्वघ्नी ( ६८ ) कितवो भवति।

१ 'कर्ता भवति' ओ. २ 'द्यावापृथिव्यौ इति' ई. ३ 'अव्हयत्' अ. ४ 'प्रममुञ्चतः' अ. ५ '°ख्यान वेदयन्ते' इ. ६ 'भवति' ई. ७ 'इत्यपि निगमो भवति' ई. ८ 'जोषः' अ. ९ '°नामधेयवचनं' इ. १० 'स्तौति' इत्यस्यानन्तरं 'तेष्वृतस्य वर्धायतारौ न' इति सायणगृहीतपाठेऽधिकम्. ११ 'विविजज्ञपः' क. १२ 'वा' ई. १३ 'सु' ई. १४ 'अन्तरिक्ष' ओ। इ. १५ 'इति' ई. १६ 'सूत्रमपि' अ. १७ 'कृत्तिं वसान आचर पिनाकं बिभ्रदा गहि ( य० वा० सं० १६।५१ ) इत्यपि °ओ

स्वं हन्ति । स्वं पुनः आश्रितं भवति । कृतं न श्वघ्नी वि चिनोति देवने ( ऋ० सं० १०।४३।५ ) । कृतमिव श्वघ्नी विचिनोति देवने । कितवः किं तव अस्ति इति शब्दानुकृतिः । कृतवान् वा आशीर्नामकः । समम् ( ६९ ) इति परिग्रहार्थीयं सर्वनाम अनुदात्तम् ( महा० २२ ॥ गु० ४ अथवा २५ ) ।

मा नः समस्य दूढ्यं - परिद्वेषसो अंहतिः । ऊर्मिर्न नावमा वधीत् ( ऋ० सं० ८।७५।९ ) ॥ मा नः सर्वस्य दुर्धियः पापधियः सर्वतः द्वेषसः अंहतिः ऊर्मिरिव नावम् आवधीत् । ऊर्मिः ऊर्णोतेः । नौः प्रणोत्तव्या भवति । नमतेर्वा । तत्कथमनुदात्तप्रकृति नाम स्यात् । दृष्टव्ययं तु भवति । उतो समस्मिन्ना शिशीहि नो वसो ( ऋ० सं० ८।२१।८ ) इति सप्तम्याम् । शिशीतिर्दानकर्मा । उरुष्या णो अघायतः समस्मात् ( ऋ० सं० ५।२४।३ ) इति पञ्चम्याम् । उरुष्यतिः रक्षाकर्मा । अथापि प्रथमाबहुवचने । नभन्तामन्यके समे (ऋ० सं० ८।३९।१ ) ( महा० २३ ॥ गु० ५ अथवा २६ )।

हविषा जारो अपां पिपर्ति पपुरिर्नरा । पिता कुटस्य चर्षणिः ( ऋ० सं० १।४६।४ ) ॥ हविषा अपां जरयिता । पिपर्ति पपुरिः इति पृणातिनिगमौ वा प्रीणातिनिगमौ वा । पिता कृतस्य कर्मणः चायिता आदित्यः । शम्बः ( ७२ ) इति वज्रनाम । शमयतेर्वा । शातयतेर्वा । उग्रो यः शम्बः पुरुहूत तेन ( ऋ० सं १०।४२।७ ) इत्यपि निगमो भवति । केपयः (७३) कपूयाः भवन्ति । कपूयम् इति पुनाति कर्म कुत्सितम् । दुष्पूयं भवति (महा० २४ ॥ गु० ६ अथवा २७ ) ।

पृथक्प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा । न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ( ऋ० सं० १०।४४।

---

१ 'आशृतं' अथवा 'आसृतं' अ. २ 'कितवान्' अ. ३ 'द्रष्टव्ययं' प्रायः सर्वेषु पुस्तकेषु. ४ 'उरुष्यतिरकर्मकः । अथा०' अ । 'उरुष्यति००समे' ई. ५ 'पृणाति' इत्यस्य स्थाने 'पूरयति'। 'प्रीणाति' इत्यस्य च 'प्रीणयाति' इ. ६ 'शमयतेर्वा शातयतेर्वा' इ. ७ 'इत्यपि निगमो भवति' ई. ८ 'दुःपूयं' इ.

६ ) ॥ पृथक् प्रायन् । पृथक् प्रथतेः । प्रथमाः देवहूतयः । ये देवान् आव्हयन्त । अकुर्वत श्रवणीयानि यशांसि दुरनुकराणि अन्यैः । ये अशक्नुवन् यज्ञियां नावम् आरोढुम् । अथ ये नाशक्नुवन् यज्ञियां नावम् आरोढुम् । ईर्मैव ते न्यविशन्त । इह एव ते न्यविशन्त । ऋणे ह एव ते न्यविशन्त । अस्मिन् एव लोके इति वा । ईर्म इति बाहुनाम । समीरिततरो भवति । एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ( ऋ० सं० १०।५०। ६ ) । एतानि सर्वाणि स्थानानि तूर्णम् उपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्व । अंसत्रम् ( ७५ ) अंहसः त्राणम् । धनुर्वा । कवचं वा । कवचं कु अञ्चितं भवति । काञ्चितं भवति । काये अञ्चितं भवति इति वा (महा० २५ ॥ गु० ७ अथवा २८ ) ।

प्रीणीताश्वान्हितं जयाथ स्वस्तिवाहं रथमित्कृणुध्वम् । द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम् ( ऋ० सं० १०।१०१। ७ )। प्रीणीत अश्वान् । सुहितं जयथ । जयनं वा हितम् अस्तु । स्वस्तिवाहनं रथं कुरुध्वम् । द्रोणाहावम् । द्रोणं द्रुममयं भवति । आहावः आह्वानात् । आवहः आवहनात् । अवतः अवातितः महान् भवति । अश्मचक्रम् अशनचक्रम् । असनचक्रम् इति वा । अंसत्रकोशम् । अंसत्राणि वः कोशस्थानीयानि सन्तु । कोशः कुष्णातेः । विकुषितो भवति । अयमपीतरः कोशः एतस्मादेव । संचयः । आचितमात्रो महान् भवति । सिञ्चत । नृपाणं नरपाणम् । कूपकर्मणा संग्राममुपमिमीते । काकुदं ( ७६ ) तालु इत्याचक्षते । जिव्हा कोकुवा । सा अस्मिन् धीयते । जिव्हा कोकुवा । कोकूयमाना वर्णान् नुदति इति वा । जिव्हा जोहुवा । तालु तरतेः । तीर्णतमम् अङ्गम् । लततेर्वा स्यात् विपरीतात् । यथा तलम् । लता इति अविपर्ययः ( महा० २६ ॥ गु० ८ अथवा २९ ) ।

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः । अनुक्षरन्ति काकुदं

१ 'पृथक् प्रथतेः' ई. २ 'आव्हयन्त' इ. ३ 'आरोल्हुं' अ. ४ 'ऋणेनैव' अ. 'ऋणे० लोके इति वा' ई. ५ 'धत्स्व' ई. ६ 'स्वस्तिवाहं' इ. ७ 'भवति' ई. ८ 'आह्वः आह्वनात्' औ. ९ 'संचयकोशः' इ. संचयःकोशः' औ. १० '°वा । कोकूयतेर्वा, स्यात् शब्दकर्मणः । जिव्हा°' ओ. ११ 'एनान्' अ.

सूर्म्यं सुषिरामिव ( ऋ० सं० ८।६९।१२ ) ॥ सुदेवः त्वं कल्याणदेवः असि वरुण यस्य ते सप्त सिन्धवः काकुदम् अनुक्षरन्ति सूर्मिं सुषिराम् इव ( महा० २७ ॥ गु० ९ अथवा २७ ) ।

प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते । विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ( ऋ० सं० ७।३९।२ ) ॥ प्रवृज्यते सुप्रायणं बर्हिः एषाम् । एयाते सर्वस्य पातारौ वा पालयितारौ वा । बीरीटम् (७७) अन्तरिक्षम् । भियो वा भासो वा ततिः । अपि वा उपमार्थे स्यात् । सर्वपती इव राजानौ बीरीटे गणे मनुष्याणाम् । रात्र्या विवासे पूर्वस्याम् अभिहूतौ । वायुश्च नियुत्वान् । पूषा च । स्वस्त्ययनाय । नियुत्वान् नियुतः अस्य अश्वाः । नियुतः नियमनाद्वा । नियोजनाद्वा । अच्छ (७८) १ अभेः । आप्तुम् इति शाकपूणिः । परि (७९) ( निरु० १।३ ) ईम् ( निरु० १।९ ) (८०) सीम् (८१) ( निरु० १।७ ) इति व्याख्याताः । एनम् (८२) एनाम् (८३) अस्याः अस्य ( निरु० ४।२५ ) इत्येतेन व्याख्यातम् । सृणिः (८४) अङ्कुशो भवति सरणात् । अङ्कुशः अञ्चतेः । आकुचितः भवतीति वा । नेदीय इत्सृण्यः पक्वमेयात् ( ऋ० सं० १०।१०१। १ ३ ) । इत्यपि निगमो भवति । अन्तिकतमम् अङ्कुशात् आयात् । पक्वम् औषधम् आगच्छतु इति आगच्छतु इति ( महा० २८ ॥ गु० १० अथवा ३१ इति पञ्चमाध्यायस्य चतुर्थः पादः )

इति निरुक्ते पूर्वषट्के पञ्चमोऽध्यायः ।

---

१ सुदेवःत्वं कल्याणदानः यस्य तव देव सप्त सिन्धवः प्राणाय अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव इत्यपि निगमो भवति' अ । 'सुदेवः त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण । यस्य ते सप्त सिन्धवः । सिन्धुः स्रवणात् । यस्य ते सप्त स्रोतांसि तानि ते काकुदम् अनुक्षरन्ति । सूर्मिं कल्याणोर्मिं स्रोतः सुषिरम् अनु यथा । बीरिटम् (७७) तैटीकिः अन्तरिक्षम् एवम् आह पूर्वं वयतेः । उत्तरम् इरतेः । वयांसि इरन्ति अस्मिन् । भांसि वा । तदेतस्याम् ऋचि उदाहरन्ति । अपि निगमो भवति' ओ. २ 'इव । बीरीटम् अन्तरिक्षम् । भियो वा वासो वा ततिः' इ. ३ 'बर्हिः' ई. ४ 'भियो वा भासो वा ततिः' ई. ५ 'अपगमे' इ. ६ 'उपसश्च पूर्वस्याम् ई. ७ 'नियमात्' क. ८ 'वा' ई. ९ 'व्याख्यातम्' अ. १० 'इत्यपि निगमो भवति' ई.

# षष्ठोऽध्यायः ।

ॐ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ( ऋ० सं २।१।१ ) ॥ त्वम् अग्ने द्युभिः अहोभिः । त्वम् आशुशुक्षणिः ( निघ० ४।३।१ ) । आशु ( निघ० २।१५।१६ ) इति च शु ( निघ० २।१५।१५ ) इति च क्षिप्रनामनी भवतः । क्षणिः उत्तरः । क्षणोतेः[1] । आशु शुचा क्षणोति इति वा[2] । सनोति इति वा । शुक् शोचतेः । पञ्चम्यर्थे वा प्रथमा । तथा हि वाक्यसंयोगः। आ इति आकारः उपसर्गः पुरस्तात् । चिकीर्षितजः उत्तरः । आशुशोचयिषुः इति । शुचिः शोचतेः ज्वलतिकर्मणः । अयमपीतरः शुचिः एतस्मादेव । निष्षिक्तम्[3] अस्मात् पापकम् इति नैरुक्ताः ( गु० १ )। इन्द्र आशाभ्यस्परि[4] सर्वाभ्यो अभयं करत् ( ऋ० सं० २।४१।१२ ) । आशाः (२) दिशो भवन्ति । आसदनात् । आशाः उपदिशो भवन्ति । अभ्यशनात् । काशिः (३) मुष्टिः । प्रकाशनात् । मुष्टिः मोचनाद्वा । मोषणाद्वा । मोहनाद्वा । इमे चिदिन्द्र रोदसी अपारे यत्संगृभ्णा मघवन्काशिरित्ते ( ऋ० सं० ३।३०।५ ) इमे चित् इन्द्र रोदसी ( निघ० ३।३०।४ ) । रोधसी । द्यावापृथिव्यौ । विरोधनात् । रोधः कूलम् । निरुणद्धि स्रोतः । कूलं रुजतेः विपरीतात् । लोष्टः अविपर्ययेण । अपारे दूरपारे । यत् संगृभ्णासि मघवन् काशिः ते महान् । अहस्तमिन्द्र संपिणक्कुणारुम् ( ऋ० सं० ३।३०।८ ) अहस्तम् इन्द्र कृत्वा संपिण्ढि परिक्वणनं मेघम्[5] ( महा० १ ॥ गु० २ ) ।

अलातृणो वल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार । सुगान्पथो अकृणोन्निरजे गाः प्रावन्वाणीः पुरुहूतं धमन्तीः ( ऋ० सं० ३।३०।१० ) ॥ अलातृणः[6] अलम् आतर्दनः मेघः । वलः वृणोतेः । व्रजः व्रजति

---

१ 'क्षणोतेः सनोतेर्वा' इ. २ 'वा' ई. ३ 'निःषिक्तम्' ओ. ४ 'परि' ई. ५ 'मेघम् । अलातृणः अलम् आतर्दनः' इ. ६ 'अलातृणः' ई.

अन्तरिक्षे । गोः एतस्या माध्यमिकाया वाचः पुरा हननात् भयमानः व्यार । सुगान्पथो अकृणोन्निरजे गाः । सुगमनान् पथः अकरोत् निर्गमनाय[1] । गवाम् । आनन्दावीः पुरुहूतं धमन्तीः । आपो वा । वहनात् । वाचो वा । वदनात् । बहुभिः आहूतम् उदकं भवति । धमतिः गतिकर्मा[2] ( महा० २ ॥ गु० ३ ) ।

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि । आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुषिं हेतिमस्य ( ऋ० सं० ३।३०।१७ ) ॥ उद्धर रक्षः सहमूलम् इन्द्र । मूलं[3] मोचनाद्वा । मोषणाद्वा । मोहनाद्वा । वृश्च[4] मध्यम् । प्रतिशृणीहि अग्रम् । अग्रम्[5] आगतं भवति । आ कियतो देशात् । सललूकं संलुब्धं भवति[6] पापकम् इति नैरुक्ताः । सररूकं वा स्यात् । सर्तेः अभ्यस्तात्[7] । तपुषिः तपतेः । हेतिः हन्तेः । त्वं चिदित्था कत्पयं शयानम् ( ऋ० सं० ५।३२।६ ) । सुखपयसम् । सुखम्[8] अस्य पयः । विस्रुहः (८) आपो भवन्ति । विस्रवणात् । वया इव रुरुहुः सप्त विस्रुहः ( ऋ० सं० ६।७।६ ) इत्यपि[9] निगमो भवति । वीरुधः (९) ओषधयो भवन्ति । विरोहणात् । वीरुधः पारयिष्ण्वः ( ऋ० सं० १०।९७।३ ) नक्षद्दाभम् (१०) अश्नुवानदाभम् । अभ्यशनेन दभ्नोति इति[10] । नक्षद्दाभं ततुरिं पर्वतेष्ठाम् ( ऋ० सं० ६।२२।२ ) इत्यपि निगमो भवति । अस्कृधोयुः (११) अकृध्वायुः । कृधु ( निघ० ३।२।६ ) इति ह्रस्वनाम । निकृत्तं भवति । यो अस्कृधोयुरजरः स्वर्वान् ( ऋ० सं० ६।२२।३ ) इत्यपि निगमो भवति । निशृम्भाः[11] (१२) निश्रथ्यहारिणः ( महा० ३ ॥ गु० ४ ) ।

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् । देवं वहन्तु बिभ्रतः ( ऋ० सं० ६।५५।६ ) ॥ आवहन्तु अजाः पूषणं रथे निश्रथ्यहारिणः[12] ते जन-

---

१ 'निरजनाय' अ. २ ' 'कर्मा । सुलल्कं संलुब्धं सररूकं वा' इ. ३ 'मूलं००मोहनाद्वा' ई. ४ 'वृश्चा' इ. ५ 'अग्रम् आगतं भवति' ई ६ 'भवति' ई. ७ 'अभ्यस्तात्' ई. ८ 'सुखम् अस्य पयः' ई. ९ 'इत्यपि निगमो भवति' ई. १० 'इति' ई. ११ 'निशृम्भा निश्रथ्याहारिणः' आ. १२ निश्रथ्याहारिणः' ओ.

श्रियं जातश्रियम् । बृबदुक्थं (१३) महदुक्थम् । वक्तव्यम्[1] अस्मै उक्थम् इति बृबदुक्थो वा । बृबदुक्थं हवामहे ( ऋ० सं ८।३२।१० ) इत्यपि[2] निगमो भवति । ऋदूदरः (१४) सोमः । मृदूदरः । मृदुः[3] उदरेषु इति वा । ऋदूदरेण सख्या सचेय ( ऋ० सं० ८।४८।१० ) इत्यपि[2] निगमो भवति । ऋदूपे (१५) इत्युपरिष्टात् ( निरु० ६।३३ ) व्याख्यास्यामः । पुलुकामः । (१६) पुरुकामः । पुलुकामो हि मर्त्यः ( ऋ० सं० १।१७९।५ ) इत्यपि[2] निगमो भवति । असिन्वती (१७) असंखादन्त्यौ । असिन्वती बप्सती भूर्यत्तः ( ऋ० सं० १०।७९।१ ) इत्यपि[2] निगमो भवति । कर्पना[4] (१८) कम्पनाः । क्रमयो[5] भवन्ति । मोषथा वृक्षं कपनेव वेधसः ( ऋ० सं० ५।५४।६ ) इत्यपि[2] निगमो भवति । भाऋजीकः (१९) प्रसिद्धभाः । धूमकेतुः समिधा भाऋजीकः ( ऋ० सं० १०।१२।२ ) इत्यपि[2] निगमो भवति । रुजानाः (२०) नद्यो भवन्ति । रुजन्ति कूलानि । सं रुजानाः पिपिष इन्द्रशत्रुः ( ऋ० सं० १।३२।६ ) इत्यपि[2] निगमो भवति । जूर्णिः (२१) जर्वतेर्वा[6] । द्रवतेर्वा । दूनोतेर्वा[7] । क्षिप्ता जूर्णिर्न वक्षति ( ऋ० सं० १।१२९।८) इत्यपि[2] निगमो भवति । परि घ्रंसमोमना वां वयो गात् ( ऋ० सं० ७।६९।४ ) । पर्यगात् वां घ्रंसम् अहर् अवनाय[8] अन्नम् ( महा० ४ गु० ५ इति षष्ठाध्यायस्य प्रथमः पादः ) ।

उपलप्रक्षिणी (२२) उपलेषु प्रक्षिणाति[9] । उपलप्रक्षेपिणी वा[10] ( महा० ५ ॥ गु० १ अथवा ६ ) ।

कारुरहं ततो भिषगुपलप्रक्षिणी नना । नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ( ऋ० सं० ९।११२।३ ) ॥ कारुः अहम् अस्मि[11] कर्ता स्तोमानाम् । ततः भिषक् । ततः इति संताननाम । पितुर्वा ।

---

१ 'वक्तव्योक्थो वा' इ. २ 'इत्यपि निगमो भवति' ई. ३ 'मृदुः उदरेषु इति वा' ई. ४ 'कपनाः' ओ. ५ 'क्रिमयो' ओ. ६ 'जवनाद्वा । द्रवणाद्वा । दवनाद्वा' इ. ७ 'जूनोतिर्वा' अ. ८ 'अवनेन' 'अनेन' इति पाठान्तरे इति दुर्गः. ९ 'प्रक्षिणोति' इ. १० 'वा । इन्द्र ऋषीन् पप्रच्छ दुर्भिक्षे केन जीवतीति । तेषामेकः प्रत्युवाच । शकटः शाकिनी, गावो जालमस्यन्दनं वनम् । उदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तयः ॥ इति । सा निगदव्याख्याता' ओ. ११ 'आसम्' इ.

पुत्रस्य वा । उपलप्रक्षिणी सक्तुकारिका । नना नमतेः । माता वा । दुहिता वा । नानाधियः नानाकर्माणः । वसूयवः वसुकामाः । अन्वास्थिताः स्मः गावः इव लोकम् । इन्द्राय इन्दो परिस्रव इति अध्येषणा । आसीन ऊर्ध्वामुपसि क्षिणाति ( ऋ० सं० १०।२७।१३ ) । उपस्थे । प्रकलवित् (२५) वणिक् भवति । कलाश्च वेद प्रकलाश्च । दुर्मित्रासः प्रकलविन्मिमानाः ( ऋ० सं० ७।१८।१५ ) इत्यपि[1] निगमो भवति । अभ्यर्धयज्वा (२६) अभ्यर्धयन् यजति । सिषक्ति पूषा अभ्यर्धयज्वा ( ऋ० सं० ६।५०।५ ) इत्यपि[1] निगमो भवति । ईक्षे (२७) ईशिषे । ईक्षे हि वस्व उभयस्य राजन् ( ऋ० सं० ६।१९।१० ) इत्यपि[1] निगमो भवति । क्षोणस्य[2] (२८) क्षयणस्य । महः क्षोणस्याश्विना कण्वाय ( ऋ० सं० १।११७।८ ) इत्यपि[1] निगमो भवति । ( महा० ६ ॥ गु० २ अथवा ७ ) ।

अस्मे ते बन्धुः ( मैत्रा० सं० १।२।५ ॥ काठक सं० २।६ ) । वयम् इत्यर्थः । अस्मे यातं नासत्या सजोषाः ( ऋ० सं० १।११८।११ ) । अस्मान् इत्यर्थः[3] । अस्मे समानेभिर्वृषभ पौंस्येभिः ( ऋ०सं०१।१६५।७ ) । अस्माभिः इत्यर्थः[3] । अस्मे प्र यन्धि मघवन्नृजीषिन् ( ऋ० सं० ३।३६।१० ) अस्मभ्यम् इत्यर्थः[3] । अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ( ऋ० सं० ६।४७।१३ ) । अस्मत् इत्यर्थः[3] । ऊर्व इव पप्रथे कामो अस्मे ( ऋ० सं० ३।३०।१९ ) । अस्माकम् इत्यर्थः[3] । अस्मे धत्त वसवो वसूनि ( मैत्रा० सं० १।३।३८ ) । अस्मासु इत्यर्थः[3] । पाथः (३०) अन्तरिक्षम् । पथा व्याख्यातम् ( निरु० २।१८ ) । श्येनो न दीयन्नन्वेति पाथः ( ऋ० सं० ७।६३।५ ) । इत्यपि[1] निगमो भवति । उदकम् अपि पाथः उच्यते । पानात् । आ चष्ट आसां पाथो नदीनाम् ( ऋ० सं० ७।३४।१० ) । इत्यपि[1] निगमो भवति । अन्नम् अपि पाथः उच्यते । पानात् एव । देवानां पाथ उप वक्षि विद्वान् ( ऋ० सं० १०।७०।१० ) । इत्यपि निगमो भवति । सवीमनि ( ३१ ) प्रसवे । देवस्य वयं सवितुः सवीमनि ( ऋ० सं० ६।७१।२ ) । इत्यपि[1] निगमो भवति । सप्रथाः ( ३२ ) सर्वतः पृथुः ।

---

१ 'इत्यपि निगमो भवति' ई. २ 'क्षोणस्य' इदं पाठान्तरं दुर्गेण दीयते. ३ इत्यर्थः' ई.

त्वम॑ग्ने स॒प्रथा॑ असि ( ऋ० सं० ५।१३।४ ) इत्यपि निगमो भवति। विदथानि ( ३३ ) वेदनानि। वि॒दथा॑नि प्र॒चो॒दय॑न् ( ऋ० सं० ३।२७।७ ) इत्यपि[1] निगमो भवति ( महा० ७ ॥ गु० ३ अथवा ८ )।

श्राय॑न्त इव॒ सूर्यं॒ विश्वेदिन्द्र॑स्य भक्षत। वसू॑नि जा॒ते जन॑मान॒ ओज॑सा॒ प्रति॑ भा॒गं न दी॑धिम ( ऋ० सं० ८।९९।३ )॥ समाश्रिताः सूर्यम् उपतिष्ठन्ते। अपि वा। उपमार्थे स्यात्। सूर्यम् इव इन्द्रम् उपतिष्ठन्ते इति। सर्वाणि इन्द्रस्य धनानि विभक्ष्यमाणाः। स यथा धनानि विभजति जाते च जनिष्यमाणे च। तं वयं भागम् अनुध्यायाम ओजसा बलेन। ओजः ( निघ० २।९।१ ) ओजतेर्वा। उब्जतेर्वा। आशीः (३५) आश्रयणाद्वा[2]। आश्रपणाद्वा। अथ इयम् इतरा आशीः आशास्तेः। इन्द्रा॑य॒ गाव॑ आ॒शिर॑म् ( ऋ० सं० ८।६९।६ ) इत्यपि निगमो भवति। सा मे॑ स॒त्याशी॑र्दे॒वेषु[3] ( तै० सं० ३।२।७ ) इति च ( गु० ४ अथवा ९ )। य॒दा ते॒ मर्तो॒ अनु॒ भोग॒मान॒ळादिद्ग्रसि॑ष्ठ ओष॑धीरजीगः[4] ( ऋ० सं० १।१६३।७ )। यदा ते मर्तः भोगम् अन्वापेत्[5] अथ ग्रसितृतमः[6] ओषधीः अगारीः। जिगर्तिः गिरतिकर्मा वा गृणातिकर्मा[7] वा गृण्हातिकर्मा वा। मू॒रा अमू॑र॒ न व॒यं चि॑कित्वो महि॒त्वम॑ग्ने॒ त्वम॒ङ्ग वि॑त्से ( ऋ० सं० १०।४।४ )। मूढाः[8] वयं स्मः। अमूढः[9] त्वम् असि। न वयं विद्मः[10] महत्वम् अग्ने। त्वं तु[11] वेत्थ[12]। शशमानः (३८) शंसमानः। यो वां॑ य॒ज्ञैः श॑श॒मा॒नो ह॒ दाश॑ति ( ऋ० सं० १।१५१।७ ) इत्यपि निगमो भवति। दे॒वो दे॒वाच्या॑ कृ॒पा ( ऋ० सं० १।१२७।१ )। देवः देवान् प्रति अक्तया[13] कृपा[14]। कृप्[15] कृपतेर्वा। कल्पतेर्वा[16] ( महा० ८ ॥ गु० ५ अथवा १० )।

अश्र॑वं॒ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात्। अथा॒

---

१ 'इत्यपि निगमो भवति' ई. २ 'वा' ई. ३ 'देवान्' इ. ४ '°नलादि°' अ. ५ 'अनु आप्नोति' इ. ६ 'ग्रसितृतमः' ई. ७ 'गृणातिकर्मा' ई. ८ 'मूल्हाः' अ. ९ 'अमूल्हः' अ. 'अमूढः त्वम् असि' ई. १० 'विज्ञानीमः महित्वम्' इ। '°विद्म महत्व°' अ. ११ 'एव' इ. १२ 'वेत्सि' इ. १३ 'अश्वितयो। अक्तया' इ. १४ 'कल्पितया कल्पनया' इ. १५ 'कृप् कृपतेर्वा। कल्पतेर्वा' ई. १६ '°कल्पतेर्वा। विजामातुः। असुसमाप्तः इव वरः अभिप्रेतः' इ.

सोम॑स्य प्र॒यती॑ यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनयामि॒ नव्य॑म् ( ऋ० सं० १।१०९।२ ) ॥ अश्रौषं हि[1] बहुदातृतरौ[2] वां विजामातुः । असुसमासात्[3] जामातुः । विजामाता इति शश्वत् दाक्षिणाजाः क्रीतापतिम् आचक्षते । असुसमाप्त इव वरः अभिप्रेतः । जामाता । जा अपत्यम् । तन्निर्माता । उत वा घा स्यालात् । अपि च स्यालात् । स्यालः आसन्नः संयोगेन इति नैदानाः । स्यात् लाजान् आवपति इति वा । लाजाः लाजतेः[4] । स्यं शूर्पम् । स्यतेः । शूर्पम् अशनपवनम् । शृणातेर्वा । अथ सोमस्य प्रदानेन । युवाभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् । नवतरम् । ओमासः (४१) इत्युपरिष्टात् ( निरु० १२।४० ) व्याख्यास्यामः ( महा० ९ ॥ गु० ६ अथवा ११ इति षष्ठाध्यायस्य द्वितीयः पादः ) ।

सो॒मानं॒[5] स्वर॑णं कृणु॒हि ब्र॑ह्मणस्पते । क॒क्षीव॑न्तं॒ य औ॑शि॒जः ( ऋ० सं० १।१८।१ ) ॥ सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते कक्षीवन्तम् इव । यः औशिजः । कक्षीवान् कक्ष्यावान्[6] । औशिजः उशिजः पुत्रः । उशिक् वष्टेः कान्तिकर्मणः । अपि तु अयं मनुष्यकक्षः एव अभिप्रेतः स्यात् । तं सोमानां सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते ( महा० १० । गु० १ अथवा १२ ) ।

इन्द्रा॑सोमा॒ सम॒घशं॑समभ्य॒१॒घं तपु॑र्ययस्तु च॒रुर॒ग्निवाँ॑ इव । ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमनवा॒यं कि॑मी॒दिने॑ ( ऋ० सं० ७।१०४।२ ) ॥ इन्द्रासोमौ अघस्य शंसितारम् । अघं[7] हन्तेः । निर्हसितोपसर्ग आहन्ति इति । तपुः तपतेः । चरुः मृन्मयः भवति । चरतेर्वा । समुच्चरन्ति अस्मात् आपः । ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे[8] । क्रव्यादे[9] क्रव्यम् अदते[10] । घोरचक्षसे[11] घोरख्यानाय[12] । क्रव्यं विकृत्तात् जायते इति नैरुक्ताः[13] । द्वेषः धत्तम् । अनवायम् अनवचयम् । यद् अन्ये न व्यवेयुः[14] अद्वेषसः इति वा । [15]किमीदिने । किम्

१ 'हि' ई. २ 'बहुदायितरौ' अ. । 'भूरिदातारौ' इ. ३ 'असमासात्' अ. ४ 'लाजाः राजतेः' अ । 'लाजा लाजतेः' ई. ५ 'सोमानं' अ. ६ कक्ष्यावान्' ओ. ७ 'अघं००तपतेः' ई. ८ 'ब्राह्मणद्वेष्ट्रे' आ. ९ 'क्रव्यादे' आ. १० 'अदने' अ. ११ 'घोरचक्षसे' आ. १२ 'घोरव्याख्यानाय' ई. १३ 'इति नैरुक्ताः' ई. १४ 'अव्यवेयं' अ. १५ 'किमीदी पिशुनः' इ.

इदानीम् इति चरते[1]। किम् इदं किम् इदम् इति वा पिशुनाय[2] चरते। पिशुनः पिंशतेः। विपिशति इति ( महा० ११ ॥ गु० २ अथवा १३ )।

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन। तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ( ऋ० सं० ४।४।१ )॥ कृणुष्व पाजः। पाजः पालनात्। प्रसितिम् इव पृथ्वीम्। प्रसितिः प्रसयनात्[3]। तन्तुर्वा। जालं वा। याहि राजा इव अमात्यवान्। अभ्यमनवान्। स्ववान् वा। इराभृता गणेन। गतभयेन हस्तिना इति वा। तृष्व्या अनु प्रसित्या[4] द्रूणानः। तृष्वी इति क्षिप्रनाम। तरतेर्वा। त्वरतेर्वा[5]। असिता असि। विध्य रक्षसः तपिष्ठैः तप्ततमैः तृप्ततमैः[6]। प्रपिष्टतमैः[7] इति वा। यस्ते गर्भममीवा दुर्णामा योनिमाशये ( ऋ० सं० १०।१६२।२ )। अमीवा ( ४६ ) अभ्यमनेन व्याख्यातः[8] ( अस्मिन्नेव खण्डे )। दुर्णामा[9] क्रिमिः भवति। पापनामा। क्रिमिः[10] क्रव्ये मेद्यति। क्रमतेर्वा स्यात् सरणकर्मणः। क्रामतेर्वा। अतिक्रामन्तो दुरितानि विश्वा। अतिक्रममाणा दुर्गतिगमनानि सर्वाणि। अप्वा ( ४८ )। यत् एनया विद्धः अपवीयते। व्याधिर्वा। भयं वा अप्वे परेहि ( ऋ० सं० १०।१०३।१२ )। इत्यपि[11] निगमो भवति। अमतिः ( ४९ ) अमामयी मतिः। आत्ममयी। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्[12] ( कपि० सं० ११।९ ॥ मैत्रा० सं० १।२।५ )। इत्यपि निगमो भवति। श्रुष्टि ( ५० ) इति क्षिप्रनाम। आशु[13] अष्टि इति ( महा० १२ ॥ गु० ३ अथवा १४ )।

ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम् ( ऋ० सं० ७।३९।४ )। तान् अध्वरे यज्ञे उशतः कामयमानान् यज अग्ने[14] श्रुष्टी

---

१ 'चराति' इ. २ 'पिशुनाय' ई. ३ 'प्रसङ्गनात्' अ. ४ 'क्षिप्रम् अनुप्रसितया गत्या द्रूणानः' इ. ५ 'तृष्वी° त्वरतेर्वा' ई. ६ 'तृप्ततमैः' सायणगृहीतनिरुक्तमूले नास्ति। 'तृप्ततमैः' °इति वा' ई. ७ 'प्रपिष्ठतमैः' अ। 'तपिष्ठतमैः' सायणः. ८ 'व्याख्यातम्' इ. ९ 'दुर्नामा' अ. १० 'कृमिः' ओ.। 'क्रमिः °क्रामतेर्वा' ई. ११ 'इत्यपि निगमो भवति' ई. १२ 'अदिद्युतत्सवीमनि' ओ. १३ 'आशु अष्टि' इत्यस्य स्थाने 'श्वसनम्। पुरंधिः पुरंधीः' इ। अस्य व्याख्याने द्वयोः गुर्जरवृत्तिपुस्तकयोः 'पुरंधीत्यवगमः' एकस्मिन् उत्तमवृत्तिपुस्तके। पुरंधीत्यवगमः' इत्यत्र 'रं' इतीदमक्षरं 'रु' इति शुद्धीक्रियते। १४ 'अग्नेः' ओ.

भगं नासत्यौ च अश्विनौ। सत्यौ एव नासत्यौ इति और्णवाभः। सत्यस्य प्रणेतारौ इति आग्रायणः। नासिकाप्रभवौ बभूवतुः इति वा। पुरन्धिः (५१) बहुधीः। तत् कः पुरन्धिः। भगः पुरस्तात्। तस्य अन्वादेशः इत्येकम्। इन्द्रः इत्यपरम्। स बहुकर्मतमः। पुरां च दारयितृतमः। वरुणः इत्यपरम्। तं प्रज्ञया स्तौति। इमामू नु कवितमस्य मायाम् (५।८५।६) इत्यपि निगमो भवति। रुशत् (५२) इति वर्णनाम। रोचतेर्ज्वलतिकर्मणः। समिद्धस्य रुशदद‍र्शि पाजः (ऋ० सं ५।१।२) इत्यपि निगमो भवति (महा० १३॥ गु० ४ अथवा १५)।

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् (ऋ० सं० ८।२७।१०)। अस्ति हि वः समानजातिता रेशयदारिणः देवाः। अस्ति १
आप्यम्। आप्यम् आप्नोतेः। सुदत्रः (५४) कल्याणदानः। त्वष्टा सुदत्रो वि दधातु रायः (ऋ० सं० ७।३४।२२) इत्यपि निगमो भवति। सुविदत्रः (५५) कल्याणविद्यः। आग्ने याहि सुविदत्रेभिरर्वाङ् (ऋ० सं० १०।१५।९) इत्यपि निगमो भवति। आनुषक् (५६) इति नाम आनुपूर्वस्य। अनुषक्तं भवति। स्तृणन्ति बर्हिरानुषक् (ऋ० सं० ८।४५।१) इत्यपि निगमो १
भवति। तुर्वणिः (५७) तूर्णवनिः। स तुर्वणिर्महाँ अरेणुपौंस्ये (ऋ० सं० १।५६।३) इत्यपि निगमो भवति। गिर्वणाः (५८) देवः भवति। गीर्भिः एनं वनयन्ति। जुष्टं गिर्वणसे बृहत् (ऋ० सं० ८।८९।७) इत्यपि निगमो भवति (महा० १४॥ गु० ५ अथवा १६)।

असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि (ऋ० सं० २
१०।८२।४)। असुसमीरिताः सुसमीरिते। वातसमीरिताः। माध्यमकाः देवगणाः। ये रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति। त आयजन्त (ऋ० सं० १०।८२।४) इति अतिक्रान्तं प्रतिवचनम्। अभ्यक्ता तं इन्द्र ऋष्टिः

१ 'बहुभिः' अ. २ 'इत्यपि निगमो भवति' ई. ३ 'रेशयदासिनो' इ। 'रेशयद्वारिणः' इति केचिदधीयते इति दुर्गः. ४ 'भवति' ई. ५ 'वातसमीरिताः' ई। 'वाजसमीरिताः' अ. ६ 'ते' अ। इ.

( ऋ० सं० १।१६९।३ )। अमाक्ता इति वा। अभ्यक्ता इति वा। यादृश्मिन् धायि तमपस्यया विदत् (ऋ० सं० ५।४४।८)। यादृशे अधायि[1] तम्[2] अपस्यया अविदत्। उस्रः पितेव जारयायि यज्ञैः ( ऋ० सं० ६।१२।४ )। उस्र इव गोपिता अजायि यज्ञैः[3] ( महा० १५ ॥ गु० ६ अथवा १७ )।

प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः (ऋ० सं० ४।३४।३)। प्रास्थुः वः। जोषयमाणाः भवत[4] सर्वे। अग्रगमनेन[5] इति वा। अग्रसंपादिनः इति वा। अपि वा। अग्रम् इत्येतत् अनर्थकम् उपबन्धम् आददीत। अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् (ऋ० सं० १०।११६।८)। अद्धि इन्द्र प्रस्थितानि इमानि हवींषि। चनो दधिष्व। चनः ( ६४ ) इति अन्ननाम। पचतिः नामीभूतः। तं मेदस्तः प्रति पचताग्रभीष्टाम् ( मैत्रा० सं ४।१३।९ ) इत्यपि[6] निगमो भवति। अपि वा। मेदसश्च पशोश्च[7] सात्त्वं द्विवचनं स्यात्। यत्र हि एकवचनार्थः प्रसिद्धं तत् भवति। पुरोळा[8] अग्ने पचतः ( ऋ० सं० ३।२८।२ ) इति[9] यथा। शुरुधः ( ६६ ) आपः भवन्ति। शुचं संरुन्धन्ति। ऋतस्य हि शुरुधः सन्ति पूर्वीः ( ऋ० सं० ४।२३।८ ) इत्यपि[6] निगमो भवति। अमिनः ( ६७ ) अमितमात्रः। महान् भवति। अभ्यमितः वा। अमिनः सहोभिः ( ऋ० सं० ६।१९।१ ) इत्यपि[6] निगमो भवति। जझ्झतीः ( ६८ ) आपः भवन्ति। शब्दकारिण्यः। मरुतो जझ्झतीरिव ( ऋ० सं० ५।५२।६ ) इत्यपि[6] निगमो भवति। अप्रतिष्कुतः (६९) अप्रतिष्कृतः। अप्रतिस्खलितः वा। अस्मभ्यमप्रतिष्कुतः (ऋ० सं० १।७।६ ) इत्यपि[6] निगमो भवति। शाशदानः ( ७० ) शाशाद्यमानः। प्र स्वां मतिमतिरच्छाशदानः ( ऋ० सं० १।३३।१३ ) इत्यपि[6] निगमो भवति ( महा० १६ ॥ गु० ७ अथवा १८। इति षष्ठाध्यायस्य तृतीयः पादः )।

सृप्रः (७१) सर्पणात्। इदमपि इतरत् सृप्रम् एतस्मादेव। सर्पिर्वा।

---

१ 'धत्ते' इ. २ 'तादृशं' इ. ३ 'यज्ञेषु' इ. ४ 'अ वा भवत' इ. ५ 'अग्रगरणेन इति वा। अग्रसं०' ओ. ६ 'इत्यपि निगमो भवति' ई. ७ 'पशोश्च' ई. ८ 'पुरोला' अ. ९ 'इति यथा' ई. १० 'महान् भवति' ई.

तैलं वा । सृप्रकरस्नमूतये (ऋ० सं० ८।३२।१०) इत्यपि निगमो भवति । करस्नौ बाहू । कर्मणां प्रस्नातारौ । सुशिप्रम् (७२) एतेन व्याख्यातम् । वाजे सुशिप्र गोमति (ऋ० सं० ८।२१।८) इत्यपि निगमो भवति । शिप्रे हनू नासिके वा । हनुः हन्तेः । नासिका नसतेः । वि ष्यस्व शिप्रे वि सृजस्व धेने (ऋ० सं० १।१०१।१०) इत्यपि निगमो भवति । धेना दधातेः । रंसु (७३) रमणात् । स चित्रेण चिकिते रंसु भासा (ऋ० सं० २।४।५) इत्यपि निगमो भवति । द्विबर्हाः (७४) द्वयोः स्थानयोः परिवृढः मध्यमे च स्थाने उत्तमे च । उत द्विबर्हा अमिनः सहोभिः (ऋ० सं० ६।१९।१) इत्यपि निगमो भवति । अक्रः (७५) आक्रमणात् । अक्रो न बभ्रिः समिथे महीनाम् (ऋ० सं० ३।१।१२) इत्यपि निगमो भवति । उराणः (७६) उरु कुर्वाणः । दूत ईयसे प्रदिव उराणः (ऋ० सं० ४।७।८) इत्यपि निगमो भवति । स्तियाः (७७) आपः भवन्ति । स्त्यायनात् । वृषा सिन्धूनां वृषभः स्तियानाम् (ऋ० सं० ६।४४।२१) इत्यपि निगमो भवति । (गु० १ अथवा १९) । स्तिपाः (७८) स्तियापालनः । उपस्थितान् पालयति इति वा । स नः स्तिपा उत भवा तनूपाः (ऋ० सं० १०।६९।४) इत्यपि निगमो भवति । जबारु (७९) जवमानरोहि । जरमाणरोहि । गरमाणरोहि इति वा । अग्रे रूप आरुपितं जबारु (ऋ० सं० ४।५।७) इत्यपि निगमो भवति । जरूथं (८०) गरूथम् । गृणातेः । जरूथं हन्यक्षि राये पुरंधिम् (ऋ० सं० ७।९।६) इत्यपि निगमो भवति । कुलिशः (८१) इति वज्रनाम । कूलशातनः भवति । स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः (ऋ० सं० १।३२।५) । स्कन्धः वृक्षस्य । समास्कन्नः भवति । इदमपि इतरत् स्कन्धः एतस्मादेव । आस्कन्नं काये । अहिः शयते उपपर्चनः पृथिव्याः । तुञ्जः (८२) तुञ्जतेः दानकर्मणः (महा० १७ ॥ गु० २ अथवा २०) ।

---

१ 'इत्यपि निगमो भवति' ई. २ 'सुशिप्रः' इ. ३ 'धेना दधातेः' ई. ४ 'परिवृल्हः' अ. ५ 'वा' आ. ६ 'जवमान' ओ । 'जरमाणरोहि इति वा जवमानरोहि इति वा' इति सायणगृहीतपाठः । 'गरमाणरोहीति वा' सायणगृहीतपाठे नासीत्. ७ 'स्कन्धः०० काये' ई. ८ 'अयमपीतरः' ओ.

तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः। न विन्धे अस्य सुष्टुतिम् (ऋ० सं० १।७।७)। दाने दाने ये उत्तरे[1] स्तोमाः इन्द्रस्य वज्रिणः न अस्य तैः विन्दामि समाप्तिं स्तुतेः[2]। बर्हणा (८३) परिबर्हणा। बृहच्छ्रवा असुरो बर्हणा कृतः (ऋ० सं० १।५४।३) इत्यपि[3] निगमो भवति (महा० १८॥ गु० ३ अथवा २१)।

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह। अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः (ऋ० सं० ५।३४।३)॥ घ्रंसः (निघ० १।९।६) इति अहर्नाम। ग्रस्यन्ते अस्मिन् रसाः। गोः ऊधः उद्धततरं भवति। उपोन्नद्धम्[4] इति वा। स्नेहानुप्रदानसामान्यात् रात्रिः अपि ऊधः उच्यते। स यः अस्मै अहनि अपि वा रात्रौ सोमं सुनोति भवति अह[5] द्योतनवान्। अपोहति अपोहति शक्रः तितनिषुं धर्मसंतानात् अपेतम् अलंकरिष्णुम् अयज्वानं तनूशुभ्रं तनूशोभयितारम्। मघवा यः कवासखः[6]। यस्य कपूयाः सखायः। न्याविध्यदिलीबिशस्य दृळ्हा[7] वि शृङ्गिणमभिनच्छुष्णमिन्द्रः। (ऋ० सं० १।३३।१२)। निरविध्यत्[8] इलाबिलशयस्य दृळ्हानि। व्यभिनत् शृङ्गिणं शुष्णम् इन्द्रः (महा० १९॥ गु० ४ अथवा २२)।

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः। गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै (ऋ० सं० १।६१।१२)॥ अस्मै प्रहर[9] तूर्णं[10] त्वरमाणः वृत्राय वज्रम् ईशानः। कियेधाः कियद्धाः[11] इति वा। क्रममाणधाः इति वा। गोः इव पर्वाणि विरद मेघस्य। इष्यन् अर्णांसि अपां चरणाय। भृमिः (८७) भ्राम्यतेः। भृमिरस्यृषिकृन्मर्त्यानाम् (ऋ० सं० १।३१।१६) इत्यपि[3] निगमो भवति। विष्पितः (८८) विप्राप्तः[12]। पारं नो अस्य विष्पितस्य पर्षन् (ऋ० सं० ७।६०।७)। इत्यपि निगमो भवति (महा० २० ॥ गु० ५ अथवा २३)।

---

१ 'उत्तरं' ई. २ 'स्तुतेः इत्यर्थः' इ. ३ 'इत्यपि निगमो भवति' ई. ४ 'उन्नद्धम्' सायणगृहीतपाठः ५ 'अह' ई. ६ 'यः कपूयसखः' इ. ७ 'दृल्हा' अ. ८ 'न्यविध्यत्' इ. ९ 'प्रभर' इ. १० 'तूर्णं' ई. ११ 'कियद्धाः इति वा। क्रममाणधाः इति वा' इदं दुर्गवृत्तौ १९ खण्डस्यान्ते वर्तते. १२ 'विष्प्राप्तः' अ.

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना । त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः ( ऋ० सं० १।१४२।१० ) ॥ तत् नः तूर्णापि महत् संभृतम्[1] आत्मना त्वष्टा धनस्य[2] पोषाय विष्यतु इति । अस्मयुः अस्मान् कामयमानः । रास्पिनः (९०) । रास्पी रपतेर्वा । रसतेर्वा । रास्पिनस्यायोः ( ऋ० सं० १।१२२।४ ) इत्यपि[3] निगमो भवति । ऋञ्जतिः (९१) प्रसाधनकर्मा । ऋजुः[4] (९२) इति अपि अस्य भवति । ऋजुनीती नो वरुणः ( ऋ० सं० १।९०।१ ) इत्यपि[3] निगमो भवति । प्रतद्वसू ( ९३ ) प्राप्तवसू । हरी इन्द्र प्रतद्वसू अभि स्वर ( ऋ० सं० ८।१३।२७ ) इत्यपि[3] निगमो भवति ( महा० २१ ॥ गु० ६ अथवा २४ ) ।

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् । ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ( ऋ० सं० १०।३०।११ ) ॥ प्रहिणुत नः[5] अध्वरं देवयज्यायै[6] । प्रहिणुत ब्रह्म धनस्य[7] सननाय । ऋतस्य योगे यज्ञस्य योगे । याज्ञे शकटे इति वा । शकटं शकृदितं[8] भवति । शनकैः तकति इति वा । शब्देन तकति ति वा । श्रुष्टीवरीर्भूतनास्मभ्यमापः । सुखवत्यः भवत अस्मभ्यम् आपः । चोष्कूयमाण इन्द्र भूरि वामम् ( ऋ० सं० १।३३।३ ) । ददत् इन्द्र बहु वननीयम् । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् (ऋ० सं० ६।४७।१६) । व्युदस्यति एधमानान् अहर्[9] द्वेष्टि असुन्वतः । सुन्वतः अभ्यादधाति[10] । उभयस्य राजा दिव्यस्य च पार्थिवस्य[11] च । चोष्कूयमाणः (९५) इति चोष्कूयतेः (९६) चर्करीतवृत्तम् । सुमत् (९७ स्वयम् इत्यर्थः[12] । उप प्रागात्सुमन्मेऽधायि मन्म ( ऋ० सं० १।१६२।७ ) । उपप्रैतु मां स्वयं यत् मे मनः अध्यायि यज्ञेन इति आश्वमेधिकः मन्त्रः । दिविष्टिषु ( ९८ ) दिव एषणेषु । स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ( ऋ० सं० ८।४।१९ ) । स्थूरः समाश्रितमात्रः[13] महान् भवति ।

---

१ 'संभृतं' ई. २ 'धनपोषाय' इ. ३ 'इत्यपि निगमो भवति' ई. ४ 'आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्त्यापि निगमो भवति । ऋजुः' ओ. ५ 'नः' ई. ६ 'देवयजनाय' इ. ७ 'धनानां सनये' इ. ८ 'शकृद्टं' अ. ९ 'अहर्' ई. १० 'अभ्यादधाति सुकृतस्य लोके' इ. ११ 'मानुषस्य' इ. १२ 'इत्यर्थः' ई. १३ 'समास्थित' इ.

अणुः अनु स्थवीयांसम् । [1]उपसर्गः लुप्तनामकरणः । यथा संप्रति । कुरुङ्गः राजा बभूव । कुरुगमनात् वा । कुलगमनात् वा । कुरुः कृन्ततेः । क्रूरम् इत्यपि अस्य भवति । कुलं कुष्णातेः । विकुषितं भवति । दूतः (९९) व्याख्यातः ( निरु० ५।१ ) जिन्वतिः (१००) प्रीतिकर्मा । भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ( ऋ० सं० १।१६४।५१ ) [2]इत्यपि निगमो भवति । ( महा० २२ ॥ गु० ८ अथवा २६ इति । षष्ठाध्यायस्य चतुर्थः पादः ) ।

अमत्रः (१०१) अमात्रः । महान् भवति । अभ्यमितो वा । महाँ अमत्रो वृजने विरप्शी ( ऋ० सं० ३।३६।४ ) इत्यपि निगमो भवति । स्तवै वज्र्यृचीषमः ( ऋ० सं० १०।२२।२ ) । स्तूयते वज्री ऋचा समः । अनर्शरातिम् (१०३) अनश्लीलदानम् । अश्लीलं पापकम् । [3]अश्रिसत् विषमम् । अनर्शरातिं वसुदामुप स्तुहि ( ऋ० सं० ८।९९।४ ) इत्यपि निगमो भवति । अनर्वा (१०४) अप्रत्यृतः अन्यस्मिन् । अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ( ऋ० सं० १।१९०।१ ) । [4]अनर्वम् अप्रत्यृतम् अन्यस्मिन् । वृषभम् । मन्द्रजिह्वं मन्दनजिह्वम् । [5]मोदनजिह्वम् इति वा । बृहस्पतिं वर्धय नव्यम् अर्कैः [6]अर्चनीयैः स्तोमैः । असामि (१०५) सामि-[7]प्रतिषिद्धम् । [8]सामि स्यतेः । असाम्योजो बिभृथा सुदानवः ( ऋ० सं० १।३९।१० ) । असुसमाप्तं बलं बिभृथ कल्याण[9]दानाः ( महा० २३ ॥ गु० १ अथवा २७ ) ।

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा । भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ( ऋ० सं० ८।१।२० ) ॥ मा चुक्रुधं त्वा सोमस्य [10]गालनेन सदा याचन् अहं गिरा गीत्या स्तुत्या । भूर्णिम् इव मृगं [11]न सवनेषु चुक्रुधम् । कः ईशानं न [12]याचिष्यते [13]इति । आ त्वा

१ 'उपसर्गो लुप्तो नामकरणः' अथवा 'उपसर्ग लुप्तो नामकरणः' अ. २ 'इत्यपि निगमो भवति' ई. ३ 'अश्लिमत् अ. ४ 'अनर्वम् अप्रत्यृतम् अन्यस्मिन्' ई. । 'अनर्वाणं' सायणः. ५ 'मोदनजिह्वम् इति वा' ई. ६ 'अर्चनीयः स्तोमैः' ई. ७ 'सामिप्रतिषेधः' इ. ८ 'सामि स्यतेः' ई. ९ '°दानाः । गल्दया । गलितधानी स्यात् । गल्दा धमानिर्भवति' इ. १० 'गलनेन' इ. ११ 'मा' इ. १२ 'याचिष्यति' अ । इ. १३ 'इति' ई । '°इति । गल्दा धमनयो भवन्ति । गलनम् आसु धीयते । आ त्वा°' ओ.

विशन्त्विन्दव आगल्दा धमनीनाम् । नानाविभक्ती[1]त्येते भवतः । आगलनाः[2] धमनीनाम् इति अत्र अर्थः ( महा० २४ ) ।

न पापासो मनामहे नारायासो न जल्हवः (ऋ० सं० ८।६१।११)। न पापाः मन्यामहे न अधनाः न ज्वलनेन[3] हीनाः । अस्ति अस्मासु ब्रह्मचर्यम् अध्ययनं तपः दानकर्म इति ऋषिः अवोचत् । बकुरः ( १०८ ) भास्करः । भयंकरः । भासमानः द्रवति इति वा[4] ( महा० २५ ॥ गु० २ अथवा २८ ) ।

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा । अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय ( ऋ० सं० १।११७।२१ ) ॥ यवम् इव[5] वृकेण अश्विनौ निवपन्तौ । वृकः[6] लाङ्गलं भवति । विकर्तनात् । लाङ्गलं लङ्गतेः । लाङ्गूलवद्वा । लाङ्गूलं लगतेः[7] । लङ्गतेः । लम्बतेर्वा । अन्नं दुहन्तौ मनुष्याय दर्शनीयौ[8] । अभिधमन्तौ दस्युम् । बकुरेण ज्योतिषा वा । उदकेन वा । आर्यः ईश्वरपुत्रः[9] । बेकनाटाः[10] ( १०९ ) खलु[11] कुसीदिनः भवन्ति[12] । द्विगुणकारिणः वा । द्विगुणदायिनः वा । द्विगुणं[13] कामयन्ते इति[14] वा । इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ( ऋ० सं० ८।६६।१० ) । इन्द्रः[15] सर्वान् बेकनाटान् अहर्दृशः सूर्यदृशः । ये इमानि अहानि पश्यन्ति न पराणि इति वा । अभिभवति कर्मणा पणीन् च वणिजः ( महा० २६ ॥ गु० ३ अथवा २९ ) ।

जीवान्नो अभि धेतनादित्यासः पुरा हथात् । कद्ध स्थ हवनश्रुतः (ऋ० सं० ८।६७।५) ॥ जीवतः नः अभिधावत आदित्याः पुरा हननात् । क्व नु स्थ व्हानश्रुतः[16] । इति मत्स्यानां जालम् आपन्नानाम् एतत् आर्षं वेदयन्ते । मत्स्याः मधौ उदके स्यन्दन्ते । माद्यन्ते अन्योन्यं भक्षणाय इति वा । जालं जलचरं भवति । जलभवं वा । जलेशयं वा । अंहुरः ( १११ ) अंहस्वान् ।

---

१ 'नानाविभक्ती त्वेते' । अ. इ. २ 'गलनाः' अ. ३ 'ज्वलनहीनाः' इ. ४ 'भास्वद्द्रवणो वा' इ. ५ 'इव' ई. ६ 'वृकः °लम्बतेर्वा' ई. ७ 'लगतेः' अ. ८ 'दर्शनीयौ' ई. ९ 'ईश्वरः पुत्रः' अ. १० 'बेकनाटान्' इ. ११ 'खलु' ई. १२ 'भवन्ति' ई. १३ 'द्विगुणकामिनः' इ. १४ 'इति' ई. १५ '°इन्द्रो यः सर्वान्°' ओ. १६ 'व्हानश्रुतः' ई.

अंहूरणम् इति अपि अस्य भवति । कृण्वन्नंहूरणादुरु (ऋ० सं० १।१०५।१७।) इत्यपि[1] निगमो भवति । सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् (ऋ० सं० १०।५।६ ) । सप्त[2] मर्यादाः कवयः चक्रुः । तासाम् एकामपि अधिगच्छन्[3] अंहस्वान् भवति । [4]स्तेयं तल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरा[5]पानं दुष्कृतकर्मणः[6] पुनःपुनःसेवां पातके अनृतोद्यम् इति । बत (११२) इति निपातः खेदानुकम्पयोः ( महा० २७ ॥ गु० ४ अथवा ३० ) ।

बतो बतासि यम नैव ते मनो हृदयं चाविदाम । अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् (ऋ० सं० १०।१०।१३) ॥ बतः बलात् अतीतः[7] भवति । दुर्बलः बत असि यम । नैव ते मनो हृदयं च विजानीमः[8][9] । अन्या किल त्वां परिष्वङ्क्ष्यते कक्ष्या इव युक्तं लिबुजा इव वृक्षम् । लिबुजा[10] व्रततिः भवति । लीयते विभजन्ति[11] इति । व्रततिः वरणाच्च सयनाच्च[12] ततनाच्च । वाताप्यम् (११३) उदकं भवति । वातः एतत्[13] आप्याययति । पुनानो वाताप्यं विश्वश्चन्द्रम् ( ऋ० सं० ९।९३।५ ) इत्यपि निगमो भवति । वने न वायो न्यधायि चाकन् ( ऋ० सं० १०।२९।१ ) । वने इव वायः वेः पुत्रः । चायन् इति वा । कामयमानः इति वा । वा इति च यः इति च चकार शाकल्यः । उदात्तं तु एवम् आख्यातम् अभविष्यत् । असुसमाप्तश्च अर्थः । रथर्यति[15] (११५) इति सिद्धः । तत्प्रेप्सुः । रथं कामयते[16] इति वा । एष देवो रथर्यति (ऋ० सं० ९।३।५) इत्यपि निगमो भवति । (महा० २८)।

धेनुं न इषं पिन्वतमसंक्राम् ( ऋ० सं० ६।६३।८ ) । असंक्रमणीम् ( गु० ५ अथवा ३१ इति षष्ठाध्यायस्य पञ्चमः पादः ) । आधवः ( ११७ ) आधवनात् । मतीनां च साधनं विप्राणां चाधवम् (ऋ० सं० १०।२६।४)

---

१ 'इत्यपि निगमो भवति' ई. २ 'सप्तैव' ओ. ३ 'अभिगच्छन्' इ. ४ 'स्तेयमतल्पारोहणं ओ । 'स्तेयं तल्पारोहणमित्येवमाद्याः' इ. ५ 'सुरापाणं' अ. ६ 'दुष्कृतस्य कर्मणः' ओ. ७ 'बलात् अतितो भवति' ई. ८ 'अतीतो' ओ. ९ 'विजानामि' अ. १० 'लिबुजा °ततनाच्च' ई. ११ 'विभजति' अ. १२ 'शयनाच्च' अ. १३ 'एतत्' ई. १४ 'एतत्' अ. १५ 'रथर्यति रथं इर्यति । एष°' इ. १६ 'कामयन्ते' अ.

इत्यपि निगमो भवति । अनवब्रवः ( ११८ ) अनवक्षिप्तवचनः । विजेष-कृदिन्द्र इवानवब्रवः (ऋ० सं० १०।८४।५) इत्यपि[1] निगमो भवति[2] ( महा० २९ ॥ गु० १।३२ ) ।

अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ( ऋ० सं० १०।१५५।१ ) ॥ अदायिनि काणे विकटे । काणः[3] विक्रान्तदर्शनः इत्यौपमन्यवः । कणतेर्वा[4] स्यात् अणूभावकर्मणः । कणतिः शब्दाणूभावे भाष्यते अनुकणति इति । मात्राणूभावात् कणः[5] । दर्शनाणूभावात् काणः । विकटः विक्रान्तगतिः इत्यौपमन्यवः[6] । कुटतेर्वा स्यात्[7] । विकुटितो भवति । गिरिं गच्छ । सदानोनुवे शब्दकारिके । शिरिम्बिठस्य सत्वांसिः । शिरिम्बिठः मेघः । शीर्यते बिठे । बिठं[8] बीरिटेन व्याख्यातं (निरु० ५।२८) । १
तस्य सत्वैः उदकैः इति[9] स्यात् । तै त्वा[10] चातयामः । अपि वा । शिरिम्बिठः भारद्वाजः कालकर्णोपेतः अलक्ष्मीं[11] निर्नाशयांचकार[12] । तस्य सत्वैः कर्मभिः[13] इति स्यात् । तैः त्वा चातयामः । चातयतिः नाशने । पराशरः ( १२१ ) पराशीर्णस्य[14] वसिष्ठस्य स्थविरस्य जज्ञे । पराशरः शतयातुर्वसिष्ठः ( ऋ० सं० ७।१८।२१ ) इत्यपि निगमो भवति । इन्द्रोऽपि पराशरः इत्युच्यते । परा-[15] १
शातयिता यातूनाम् । इन्द्रो यातूनामभवत्पराशरः (ऋ० सं० ७।१०४।२१) इत्यपि निगमो भवति । क्रिविर्दती ( १२२ ) विकर्तनदन्ती । यत्रा वो दिद्युद्रदति क्रिविर्दती ( ऋ० सं० १।१६६।६ ) इत्यपि निगमो भवति । करूळती[16] ( १२३ ) कृत्तदती[17] ( महा० ३० ॥ गु० २ अथवा ३३ ) ।

वामंवामं त आदुरे देवो ददात्वर्यमा । वामं पूषा वामं भगो वामं २
देवः करूळती (ऋ० सं० ४।३०।२४) ॥ वामं वननीयं भवति[18] । आदुरिः आद-

१ 'इत्यपि निगमो भवति' ई. २ 'भवति । सदान्वे सदानोनुवे' इ. ३ 'काणः° इत्यौपमन्यवः' इत्यस्मात् प्राक् 'कणातिः शब्दा° काणः' इ. ४ 'कणतेर्वा° कर्मणः' ई. ५ 'काणः' ओ. ६ 'इत्यौपमन्यवः ई. ७ 'स्याद्विपरीतस्य' ओ. ८ 'बिठमन्तरिक्षं बिठं' ओ. ९ 'इति स्यात्' ई. १० 'त्वां' इ. ११ 'अलक्ष्मीः ओ. १२ 'निर्णाशयांचकार' अ. १३ 'नामभिः' इ. १४ 'पराशर्णिस्य° जज्ञे' इत्यस्य स्थाने' 'पराशीर्णजः ऋषिः पराशरः' इ. १५ 'परितः शा°' इ. १६ 'करूलती' अ. १७ 'कृत्तदती । अपि वा देवं कंचित्कृत्तदन्तं दृष्ट्वैवमवक्ष्यत्' ओ. १८ 'भवति' ई.

रणात् । तत्कः करूळती[1] । भगः । पुरस्तात्तस्यान्वादेशः इत्येकम् । पूषा इत्यपरम् । सोऽदन्तकः । अदन्तकः पूषा ( शत० ब्रा० १।७।४।७ ) इति च ब्राह्मणम् । दनो विश इन्द्र मृध्रवाचः ( ऋ० सं० १।१७४।२ ) । दानमनसः नः मनुष्यान् इन्द्र मृदुवाचः कुरु । अवीरामिव मामयं शरारुरभि मन्यते ( ऋ० सं० १०।८६।९ ) । अबलामिव माम् अयं बालः अभिमन्यते संशिशरिषुः । इदंयुः (१२६) इदं कामयमानः । अथापि तद्वदर्थे भाष्यते । वसूयुः इन्द्रः । वसुमान् इत्यत्रार्थः[2] । अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्रः[3] ( ऋ० सं० १।५१।१४ ) इत्यपि[4] निगमो भवति ( महा० ३१ ॥ गु० ३ अथवा ३४ ) ।

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ( ऋ० सं० ३।५३।१४) ॥ किं ते[5] कुर्वन्ति कीकटेषु गावः । कीकटाः[6] नाम देशः अनार्यनिवासः । कीकटाः किं कृताः । किं क्रियाभिः इतिप्रेप्साः वा[7] । न एव[8] च आशिरं दुह्रे न तपन्ति घर्मं[9] हर्म्यम् । आहर नः प्रमगन्दस्य धनानि[10] । मगन्दः कुसीदी । मांगदः । माम् आगमिष्यति[11] इति च[12] ददाति । तदपत्यं प्रमगन्दः । अत्यन्तकुसीदि[13]कुलीनः । प्रमदको वा । [14]यः अयमेवास्ति[15] लोको न परः इति प्रेप्सुः । पण्डको वा । पण्डकः पण्डगः । प्रार्दको वा । प्रार्दयति आण्डौ । आण्डौ आणी इव व्रीडयति[16] । तत्स्थम्[17] । नैचाशाखम् । नीचाशाखो नीचैः शाखः । शाखाः शक्नोतेः । आणिः अरणात् । तत् नः मघवन् रन्धय इति । रध्यतिः[18] वशगमने । बुन्दः (१२८) इषुः भवति । भिन्दो[19] वा । भयदो वा । भासमानो द्रवति इति वा ( महा० ३२ ॥ गु० ४ अथवा ३५ ) ।

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः । उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा (ऋ० सं० ८।७७।११) ॥ तुविक्षं बहुविक्षेपं[20]

---

१ 'करूलती' अ. २ 'इत्यर्थः' इ। सायणः. ३ 'इन्द्रः' आ. ४ 'इत्यपि निगमो भवति' ई. ५ 'ताः' इ. ६ 'कीकटाः अनार्यदेशनिवासिनः' इ. ७ 'वा' आ. ८ 'एव च' ई. ९ 'हरणं' सायणः। 'हर्म्यं' ई. १० 'धनं' इ. ११ 'गमिष्यति' अ. १२ 'च' ई. १३ 'कुसीदः' अ. १४ 'यः' ई. १५ 'लोकोऽस्ति' इ. १६ 'व्रीलयति' अ. १७ 'तत्स्थम्° अरणात्' ई. १८ 'रध्यातः वशगमने' ई. १९ 'बुन्दो वा भिन्दो' ओ. २० 'बहुविक्षं' अ.

महा[1]विक्षेपं वा । ते सुकृतं सूमयं सु[2]सुखं धनुः । साधयिता ते वुन्दो हिरण्म[3]यः । उभौ ते बाहू रम[4]णीयौ सां[5]ग्राम्यौ वा । ऋदूपे अर्दनपातिनौ [6]गमनपातिनौ वा[7] । [8]मर्मणि अर्दनवेधिनौ गमन[9]वेधिनौ वा ( महा० ३३ ॥ गु० ५ अथवा ३६ ) ।

निराविध्यद्गिरिभ्य आ धारयत्पक्वमोदनम् । इन्द्रो बुन्दं स्वाततम् ( ऋ० सं० ८।७७।६ ) ॥ निरवि[10]ध्यत् गिरि[11]भ्यः । [12]आधारयत् पक्वम् ओदनम् उदकदानं मेघम् । इन्द्रो बुन्दं स्वाततम् । बृन्दं ( १२९ ) बुन्देन व्याख्यातम् (निरु० ६।३२) । वृन्दारकश्च ( महा० ३४॥ गु० ६ अथवा ३७ )।

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः। अहरहर्जायते मासिमास्यथा देवा दधिरे हव्यवाहम् (ऋ० सं० १०।५२।३) ॥ अयं यो होता कर्ता स यमस्य । कम् अपि ऊ[13]हे । अन्न[14]म् अभिवहति यत् सम[15]श्नुवन्ति देवाः । अहरहः जायते । [16]मासे मासे । अर्धमासे अर्धमासे वा । अथ देवाः निदधिरे हव्यवाहम् । उल्बम् ( १३१ ) ऊर्णोतेः । वृणोतेर्वा । महत्तदुल्बं स्थविरं तदासीत् ( ऋ० सं० १०।५१।१ ) इत्य[17]पि निगमो भवति । ऋबीसम् ( १३२ ) अपगतभासम् । [18]अपहृतभासम् । [19]अन्तर्हितभासम् । गतभासं वा ( महा० ३५ ॥ गु० ७ अथवा ३८ ) ।

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तम् । ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति (ऋ०सं० १।११६।८) ॥हिमेन उदकेन ग्रीष्मान्ते अग्निं घ्रंसम् अहर् अवारयेथाम् । अन्नवतीं च अस्मै ऊर्जम् अधत्तम् अग्नये । योऽयम् ऋबीसे पृथिव्याम् अग्निः अन्तर् औष[20]धिवनस्पतिषु अप्सु तम् उन्निन्यथुः सर्वगणं सर्वनामानम् । गणः गणनात् । गुणश्च । यत् वृष्टे ओषधयः उद्यन्ति प्राणिनश्च पृथिव्यां तत् अश्विनो रूपम् । तेन [21]एनौ स्तौति स्तौति ( महा० ३६ ॥ गु० ८ अथवा ३९ इति षष्ठाध्यायस्य षष्ठः पादः ) ।

इति षष्ठोऽध्यायः ।

---

१ महाविक्षेपं वा' ई. २ 'सुखकरं' इ. ३ 'हिरण्मयः'इ. ४ 'रण्यौ रमणीयौ'ओ । सायणः. ५ सांग्राम्यावर्दूपे अ. ६ 'गमनपातिनौ वा' ई । 'गमनपातिनौ शब्दपातिनौ दूरपातिनौ वा' ओ. ७ 'वा' सायणपाठे नास्ति. ८ 'मर्मविन्धिनौ' इ. ९ 'गमनवेधिनौ वा' ई । 'गमनवेधिनौ शब्दवेधिनौ दूरवेधिनौ वा' ओ. १० 'निराविध्यत्' इ. ११ 'गिरिभ्यः' ई. १२ 'अधारयत्'इ. १३ 'ऊहे' आ. १४ 'कमप्यन्नम्' इ. १५ 'समश्नन्ति' इ. १६ 'मासि मासि' इ. १७ 'इत्यपि निगमो भवति' ई. १८ 'अपचितभासम् । अपहृतभासम्'सायणः. १९ अन्तर्हितभासं' सायणे नास्ति. २० औषधिवनस्पतिषु अप्सु' ई. २१ 'एतौ' इ.

# सप्तमोऽध्यायः

अथातो दैवतम् । तत् यानि नामानि प्राधान्यस्तुतीनां देवतानां तद् दैवतम् इत्याचक्षते । सा एषा देवतोपपरीक्षा । यत्कामः ऋषिः यस्यां देवतायाम् आर्थपत्यम् इच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति । ताः त्रिविधाः ऋचः । परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्च । तत्र परोक्षकृताः सर्वाभिः नामविभक्तिभिः युज्यन्ते । प्रथमपुरुषैश्च आख्यातस्य ( १ ) ।

इन्द्रो॑ दि॒व इन्द्र॑ ईशे पृथि॒व्याः ( ऋ० सं० १०।८९।१० )। इन्द्र॒मिद्गा॒थिनो॑ बृ॒हत् ( ऋ० सं० १।७।१ )। इन्द्रे॑णै॒ते तृ॒त्सवो॒ वेवि॑षाणाः ( ऋ० सं० ७।१८।१५ )। इन्द्रा॑य॒ साम॑ गायत ( ऋ० सं० ८।९८।१ )। नेन्द्रा॑दृ॒ते प॑वते॒ धाम॒ किं च॒न ( ऋ० सं० ९।६९।६ )। इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चम् ( ऋ० सं० १।३२।१ ) । इन्द्रे॒ कामा॑ अयंसत । इति । अथ प्रत्यक्षकृताः मध्यमपुरुषयोगाः । त्वम् इति च एतेन सर्वनाम्ना । त्वमि॑न्द्र॒ बला॒दधि॑ ( ऋ० सं० १०।१५३।२ )। वि न॑ इन्द्र॒ मृधो॑ जहि ( ऋ० सं० १०।१५२।४ ) । इति । अथापि प्रत्यक्षकृताः स्तोतारो भवन्ति । परोक्षकृतानि स्तोतव्यानि । मा चि॑द॒न्यद्वि शं॑सत ( ऋ० सं० ८।१।१ )। कण्वा॑ अ॒भि प्र गा॑यत ( ऋ० सं० १।३७।१ )। उप॒ प्रेत॑ कुशिकाश्चे॒तय॑ध्वम् (ऋ० सं० ३।५३।११ )। इति । अथ आध्यात्मिक्यः उत्तमपुरुषयोगाः । अहम् इति च एतेन सर्वनाम्ना (गु० २)। यथैतत् । इन्द्रो वैकुण्ठः ( ऋ० सं० १०।४८–४९ )। लवसूक्तम् ( ऋ० सं० १०।११९ ) । वागाम्भृणीयम् ( ऋ० सं० १०।१२५ ) । इति ( महा० २ )।

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः । अल्पशः आध्यात्मिकाः । अथापि स्तुतिरेव नाशीर्वादः । इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चम् ( ऋ० सं० १।३२।१ ) इति यथैतास्मिन् सूक्ते । अथापि आशीरेव न स्तुतिः । सुचक्षा

अहमक्षीभ्यां भूयासं सुवर्चा मुखेन सुश्रुत् कर्णाभ्यां भूयासम् ( मानवगृ० १।९।२५) इति। तदेतत् बहुलम् आध्वर्यवे याज्ञेषु च मन्त्रेषु। अथापि शपथाभिशापौ। अद्या मुरीय यदि यातुधानो अस्मि (ऋ० सं० ७।१०४।१५)। अधा स वीरैर्दशभिर्वि यूयाः ( ऋ० सं० ७।१०४।१५ ) इति। अथापि कस्यचित् भावस्य आचिख्यासा। न मृत्युरासीदमृतं न तर्हि ( ऋ० सं० १०।१२९।२ )। तम आसीत्तमसा गूळ्हमग्रे ( ऋ० सं० १०।१२९।३ )। अथापि परिदेवना कस्माच्चित् भावात्। सुदेवो अद्य प्रपतेदनावृत् ( ऋ० सं० १०।९५।१४ )। न वि जानामि यदि वेदमस्मि ( ऋ० सं० १।१६४।३७ ) इति। अथापि निन्दाप्रशंसे। केवलाघो भवति केवलादी ( ऋ० सं० १०।११७।६ )। भोजस्येदं पुष्करिणीव वेश्म ( ऋ० सं० १०।१०७।१० ) इति। एवम् अक्षसूक्ते ( ऋ० सं० १०।३४ ) द्यूतनिन्दा च कृषिप्रशंसा च। एवम् उच्चावचैः अभिप्रायैः ऋषीणां मन्त्रदृष्टयः भवन्ति ( ३ )।

तत् ये अनादिष्टदेवताः मन्त्राः तेषु देवतोपपरीक्षा। यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवताः भवन्ति। अथान्यत्र यज्ञात् प्राजापत्याः इति याज्ञिकाः। नाराशंसाः इति नैरुक्ताः। अपि वा। सा कामदेवता स्यात्। प्रायोदेवता वा। अस्ति हि आचारो बहुलं लोके। देवदेवत्यम् अतिथिदेवत्यं पितृदेवत्यम्। याज्ञदैवतो मन्त्रः इति। अपि हि अदेवताः देवतावत् स्तूयन्ते। यथा। अश्वप्रभृतीनि ओषधिपर्यन्तानि ( निघण्टु ५।३।१–२२ )। ( गु० ४ )। अथापि अष्टौ द्वन्द्वानि ( निघण्टु ५।३।२९–३६ )। स न मन्येत आगन्तून् इव अर्थान् देवतानाम्। प्रत्यक्षदृश्यम् एतत् भवति। माहाभाग्यात् देवतायाः एकः आत्मा बहुधा स्तूयते। एकस्य आत्मनः अन्ये देवाः प्रत्यङ्गानि भवन्ति। अपि च। सत्त्वानां प्रकृतिभूमभिः ऋषयः स्तुवन्ति इत्याहुः। प्रकृतिसार्वनाम्योच्च इतरेतरजन्मानः भवन्ति। इतरेतरप्रकृतयः। कर्मजन्मानः। आत्मजन्मानः। आत्मैव एषां रथो भवति। आत्मा अश्वः। आत्मा आयुधम्।

---

१ 'अर्थात्' अथवा 'अर्थानां' अ. २ 'सार्वनाम्याच्च' ओ. ३ 'अश्वाः' इ। ओ.

आत्मा इषवः । आत्मा सर्वं देवस्य देवस्य ( महा० ४ ॥ गु० ५ ॥ दुर्गवृत्तौ 'इति द्वादशाध्यायस्य प्रथमः पादः ) ।

तिस्रः एव देवताः इति नैरुक्ताः । अग्निः पृथिवीस्थानः । वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः । सूर्यो द्युस्थानः । तासां माहाभाग्यात् एकैकस्याः अपि बहूनि नामधेयानि भवन्ति । अपि वा । कर्मपृथक्त्वात् । यथा । होता अध्वर्युः ब्रह्मा उद्गाता इति अपि एकस्य सतः । अपि वा । पृथक् एव स्युः । पृथक् हि स्तुतयो भवन्ति । तथा अभिधानानि । यथो एतत् । कर्मपृथक्त्वात् इति । बहवोऽपि विभज्य कर्माणि कुर्युः । तत्र संस्थानैकत्वं संभोगैकत्वं च उपेक्षितव्यम् । यथा पृथिव्यां मनुष्याः पशवो देवाः इति स्थानैकत्वं संभोगैकत्वं च दृश्यते । यथा । पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च संभोगः । अग्निना च इतरस्य लोकस्य । तत्र एतत् नरराष्ट्रमिव ( महा० ५ ॥ गु० ६ ) ।

अथ आकारचिन्तनं देवतानाम् । पुरुषविधाः स्युः इत्येकम् । चेतनावद्वत् हि स्तुतयो भवन्ति । तथा अभिधानानि । अथापि पौरुषविधिकैः अङ्गैः संस्तूयन्ते । ऋष्वा त इन्द्र स्थविरस्य बाहू ( ऋ० सं० ६।४७।८ ) । यत्संगृभ्णा मघवन् काशिरित्ते ( ऋ० सं० ३।३०।५ ) । अथापि पौरुषविधिकैः द्रव्यसंयोगैः । आ द्वाभ्यां हरिभ्यामिन्द्र याहि ( ऋ० सं० २।१८।४ ) । कल्याणीर्जाया सुरणं गृहे ते ( ऋ० सं० ३।५३।६ ) । अथापि पौरुषविधिकैः कर्मभिः । अद्धीन्द्र पिब च प्रस्थितस्य ( ऋ० सं० १०।११६।७ ) । आश्रुत्कर्ण श्रुधी हवम् ( ऋ० सं० १।१०।९ ) ( गु० ७ ) । अपुरुषविधाः स्युः इत्यपरम् । अपि तु यत् दृश्यते ( महा० ६ ) ।

अपुरुषविधं तत् । यथा । अग्निः वायुः आदित्यः पृथिवी चन्द्रमाः इति । यथो एतत् । चेतनावद्वत् हि स्तुतयो भवन्ति इति । अचेतनानि अपि एवं स्तूयन्ते । यथा अक्षप्रभृतीनि ओषधिपर्यन्तानि ( निघण्टु ५।३।४–२२ ) । यथो एतत् । पौरुषविधिकैः अङ्गैः संस्तूयन्ते इति । अचेतनेषु अपि एतत् भवति । अभि क्रन्दन्ति हरितेभिरासभिः ( ऋ० सं० १०।९४।२ ) इति ग्राव-

स्तुतिः । यथो एतत् । पौरुषविधिकैः द्रव्यसंयोगैः इति । एतदपि तादृशमेव । सुखं रथं युयुजे सिन्धुरश्विनम् ( ऋ० सं० १०।७५।९ ) इति नदीस्तुतिः । यथो एतत् । पौरुषविधिकैः कर्मभिः इति । एतदपि तादृशमेव । होतुश्चित्पूर्वे हविरद्यमाशत ( ऋ० सं० १०।९४।२ ) इति ग्रावस्तुतिः एव । अपि वा । उभयविधाः स्युः । अपि वा । अपुरुषविधानाम् एव सतां कर्मात्मानः एते स्युः । यथा यज्ञो यजमानस्य । एष च आख्यानसमयः ( महा० ७ ॥ गु० ८

सप्तमाध्यायस्य प्रथमः पादः । दुर्गवृत्तौ 'द्वादशाध्यायस्य द्वितीयः पादः ) ।

तिस्रः एव देवताः इत्युक्तं पुरस्तात् ( निरु० ७।५ ) । तासां भक्तिसाहचर्यं व्याख्यास्यामः । अथ एतानि अग्निभक्तीनि । अयं लोकः । प्रातःसवनम् । वसन्तः । गायत्री । त्रिवृत् स्तोमः । रथन्तरं साम । ये च देवगणाः १
समाम्नाताः प्रथमे स्थाने । अग्नायी पृथिवी इंळा[1] इति स्त्रियः । अथास्य कर्म वहनं च हविषाम् आवाहनं च देवतानाम् । यच्च किंचित् दार्ष्टिविषयिकम् अग्निकर्मैव तत् । अथास्य संस्तविकाः देवाः । इन्द्रः सोमः वरुणः पर्जन्यः ऋतवः । आग्नावैष्णवं[2] च हविः । न तु ऋक् संस्तविकी दशतयीषु विद्यते । अथापि आग्नापौष्णं हविः । न तु संस्तवः । तत्र एतां विभक्तस्तुतिम्[3] ऋचम् १
उदाहरन्ति ( महा० ८ ॥ गु० १ अथवा ९ ) ।

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ( ऋ० सं० १०।१७।३ ) ॥ पूषा त्वा इतः प्रच्यावयतु विद्वान् अनष्टपशुः भुवनस्य गोपाः इति[4] । एष हि सर्वेषां भूतानां गोपायिता आदित्यः । स त्वैतेभ्यः २
परि ददत्पितृभ्यः इति सांशयिकः तृतीयः पादः । पूषा पुरस्तात् । तस्य अन्वादेशः इत्येकम् । अग्निः उपरिष्टात् । तस्य प्रकीर्तना इत्यपरम् । अग्निर्देवेभ्यः सुविदत्रियेभ्यः । सुविदत्रं धनं भवति । विन्दतेर्वा एकोपसर्गात् । ददातेर्वा[5] स्यात् द्व्युपसर्गात् ( महा० ९ ॥ गु० २ अथवा १० ) ।

अथ एतानि इन्द्रभक्तीनि । अन्तरिक्षलोकः । माध्यंदिनं सवनम् । २

---

१ 'इला' अ. २ 'वैष्णवं हविः' ओ. ३ 'विभक्तिस्तुतिम्' ओ. ४ 'इति००आदित्यः' ई. ५ 'दधातेर्वा' अ.

ग्रीष्मः । त्रिष्टुप् । पञ्चदश स्तोमः । बृहत् साम । ये च देवगणाः समाम्नाताः मध्यमे स्थाने । याश्च स्त्रियः । अथास्य कर्म रसानुप्रदानम् । वृत्रवधः । या च का[1] च बलकृतिः इन्द्रकर्मैव तत् । अथ अस्य संस्तविकाः देवाः । अग्निः सोमः वरुणः पूषा बृहस्पतिः ब्रह्मणस्पतिः पर्वतः कुत्सः विष्णुः वायुः । अथापि मित्रः वरुणेन संस्तूयते । पूष्णा रुद्रेण च सोमः । अग्निना[2] च पूषा । वातेन च पर्जन्यः ( महा० १० ॥ गु० ३ अथवा ११ ) ।

अथ एतानि आदित्यभक्तीनि । असौ लोकः । तृतीयसवनम् । वर्षाः । जगती । सप्तदश स्तोमः । वैरूपं साम । ये च देवगणाः समाम्नाताः उत्तमे स्थाने । याश्च स्त्रियः । अथास्य कर्म रसादानम् । रश्मिभिश्च रसधारणम्[3] । यच्च किंचित् प्रवह्लितम् आदित्यकर्मैव तत् । चन्द्रमसा वायुना संवत्सरेण इति संस्तवः ( गु० ४ अथवा १२ ) । एतेषु एव स्थानव्यूहेषु ऋतुच्छन्दःस्तोमपृष्ठस्य भक्तिशेषम् अनुकल्पयीत । शरत् अनुष्टुप् एकविंशः स्तोमः वैराजं साम इति पृथिव्यायतनानि । हेमन्तः पङ्क्तिः त्रिणवः स्तोमः शाक्वरं साम इत्यन्तरिक्षायतनानि । शिशिरः अतिच्छन्दाः त्रयस्त्रिंशः स्तोमः रैवतं साम इति द्युभक्तीनि ( महा० ११ ॥ गु० ५ अथवा १३ ) ।

मन्त्राः मननात् । छन्दांसि छादनात् । यजुः[4] यजतेः । साम संमितम् ऋचा । अस्यतेर्वा[6] । ऋचा समं मेने इति नैदानाः । गायत्री गायतेः स्तुतिकर्मणः । त्रिगमना वा विपरीता । गायतो मुखात् उदपतत् इति च ब्राह्मणम् ( गु० ६ अथवा १४ ) । उष्णिक् उत्स्नाता भवति । स्निह्यतेर्वा स्यात् कान्तिकर्मणः । उष्णीषिणी इवं इत्यौपमिकम् । उष्णीषं स्नायतेः । ककुप् ककुभिनी भवति । ककुप् च कुब्जः च कुजतेर्वा । उब्जतेर्वा । अनुष्टुप् अनुष्टोभनात् । गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेन अनुष्टोभति इति च ब्राह्मणम् ( गु० ७ अथवा १५ ) । बृहती परिवर्हणात् । पङ्क्तिः पञ्चपदा । त्रिष्टुप् स्तोभत्युत्तरपदा । का तु त्रिता स्यात् । तीर्णतमं छन्दः । त्रिवृत्

---

१ 'काचित् वलकृतिः' अ. २ 'वायुना' अ । बृहद्देवता च ( २।४ ). ३ रसाधारणम्' ओ. ४ 'यत्तु' अ. ५ 'स्तोमः स्तवनात् यजुः' ओ. ६ 'अस्यतेर्वा । स्यतेर्वा' इ. ७ 'त्रिगमना° ब्राह्मणम्' ई. ८ 'वा' अ । ओ.

वज्रः । तस्य स्तोभनी[1] इति वा । यत्[2] त्रिः अस्तोभत् तत् त्रिष्टुभः त्रिष्टुप्त्वम् इति विज्ञायते ( महा० १२ ॥ गु० ८ अथवा १६ ) ।

जगती गततमं छन्दः । जलचरगतिर्वा[3] । जल्गल्यमानोऽसृजत् इति च ब्राह्मणम् । विराट् विराजनाद्वा । विराधनाद्वा । विप्रापणाद्वा । विराजनात् संपूर्णाक्षरा । विराधनात् ऊनाक्षरा । विप्रापणात् अधिकाक्षरा । पिपीलिकमध्या इत्यौपमिकम् । पिपीलिका पेलतेः गतिकर्मणः ( गु० ९ अथवा १७ ) । इति इमाः देवताः अनुक्रान्ताः । सूक्तभाजः हविर्भाजः । ऋग्भाजश्च भूयिष्ठाः । काश्चित् निपातभाजः । अथ उत अभिधानैः संयुज्य हविश्चोदयति इन्द्राय वृत्रघ्ने[4] इन्द्राय अंहोमुचे इति । तान्यपि एके समामनन्ति । भूयांसि तु समाम्नानात् । यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत् समामने । अथ उत कर्मभिः ऋषिः देवताः स्तौति वृत्रहा पुरंदरः इति । तान्यपि एके समामनन्ति । भूयांसि तु समाम्नानात् । व्यञ्जनमात्रं तु तत् तस्याभिधानस्य भवति । यथा ब्राह्मणाय बुभुक्षिताय ओदनं देहि । स्नाताय अनुलेपनम् । पिपासते पानीयम् इति ( महा० १३ ॥ गु० १० अथवा १८ द्वितीयः पादः । दुर्गवृत्तौ द्वादशस्य तृतीयः पादः ) ।

अथातः अनुक्रमिष्यामः । अग्निः पृथिवीस्थानः । तं प्रथमं व्याख्यास्यामः । अग्निः कस्मात् । अग्रणीः भवति । अग्रं यज्ञेषु प्रणीयते । अङ्गं नयति संनममानः । अक्नोपनः भवति इति स्थौलाष्ठीविः । न क्नोपयति । न स्नेहयति । त्रिभ्यः आख्यातेभ्यः जायते इति शाकपूणिः । इतात् । अक्तात् दग्धात् वा । नीतात् । स खलु एतेः अकारम् आदत्ते । गकारम् अनक्तेर्वा दहतेर्वा । नीः परः । तस्य एषा भवति (महा० १४ ॥ गु० १ अथवा १९) ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ( ऋ० सं० १।१।१ ) ॥ अग्निम् ईळे[5] अग्निं याचामि[6] । ईळिः[7] अध्येषणाकर्मा । पूजाकर्मा वा । पुरोहितः व्याख्यातः ( निरु० २।१२ ) । यज्ञश्च[8]

---

१ 'स्तोभति' अथवा 'स्तोभवीति' केषुचित् पुस्तकेषु. २ 'यत्°. विज्ञायते' ई. ३ 'जलचल°' अ. ४ '°वृत्रघ्ने । इन्द्रायवृत्रतुरे । इन्द्रा° ओ. ५ 'ईले' अ. ६ 'याचे' ई. ७ 'ईलिः' अ. ८ 'यज्ञस्य' अ.

( निरु० ३।१९ )। देवः दानाद्वा । दीपनाद्वा । द्योतनाद्वा । द्युस्थानो भवति इति वा । यो[1] देवः सा देवता । होतारं ह्वातारम् । जुहोतेः होता इति और्णवाभः । रत्नधातमं रमणीयानां धनानां दातृतमम् । तस्य एषा अपरा भवति ( महा० १५ ॥ गु० २ अथवा २० ) ।

अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त । स दे॒वाँ एह व॑क्षति ( ऋ० सं० १।१।२ ) ॥ अग्निः यः पूर्वैः ऋषिभिः ईडितव्यः[2] वन्दितव्यः[3] अस्माभिश्च नवतरैः सः देवान् इह आवहतु इति । स न मन्येत अयमेव अग्निः इति । अपि एते उत्तरे ज्योतिषी अग्नी उच्येते । ततो नु मध्यमः ( महा० १६ ॥ गु० ३ अथवा २१ ) ।

अ॒भि प्र॑वन्त॒ सम॑नेव॒ योषाः॑ क॒ल्या॒ण्यः॑ स्मय॑मानासो अ॒ग्निम् । घृ॒तस्य॒ धाराः॑ स॒मिधो॑ नसन्त॒ ता जु॑षा॒णो ह॑र्यति॒ जा॒तवे॑दाः ( ऋ० सं० ४।५८।८ ) ॥ अभिनमन्त[4] समनसः इव योषाः । समनं समननाद्वा । समाननाद्वा । कल्याण्यः स्मयमानासो अग्निम् इत्यौपमिकम्[5] । घृतस्य धाराः उदकस्य धाराः । समिधः नसन्त । नसतिः[6] आप्नोतिकर्मा वा । नमतिकर्मा वा । ता जुषाणो हर्यति जातवेदाः । हर्यतिः प्रेप्साकर्मा । अभिहर्यति[7] इति । स॒मु॒द्राद्रू॒र्मिर्मधु॑माँ॒ उदा॑रत् ( ऋ० सं० ४।५८।१ ) इति आदित्यम् उक्तं मन्यन्ते । समुद्राध्येषोऽद्भ्य उदेति ( कौषी० ब्रा० २५।१ ) इति च ब्राह्मणम् । अथापि ब्राह्मणं भवति । अग्निः सर्वाः देवताः ( ऐ० ब्रा० ६।३ ॥ मैत्रा० सं० १।४।१३ । तै० सं० ६।२।२ । शत० ब्रा० १।६।२।२० ) इति । तस्य उत्तरा भूयसे निर्वचनाय ( महा० १७ ॥ गु० ४ अथवा २२ ) ।

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हु॒रथो॑ दि॒व्यः स सु॑प॒र्णो ग॒रुत्मा॑न् । एकं॒ सद्विप्रा॑ बहु॒धा व॑दन्त्य॒ग्निं य॒मं मा॑त॒रिश्वा॑नमाहुः ( ऋ० सं० १।१६४।४६ ) ॥ इमम् एव अग्निं महान्तम्[8] आत्मानम् एकम् आत्मानं

१ 'यो देवः स देवता' ई. २ 'ईलितव्यः'अ । 'ईळितव्यः' ओ. ३ 'वन्दितव्यः' आ. ४ 'अभिनंवन्त' ओ. ५ 'इत्यौपमिकम्' ई. ६ 'नसतिः °नमतिकर्मा वा' ई. ७ 'हर्यति' इ । 'विहर्यति' ओ. ८ 'महान्तम् आत्मानम् एकम् आत्मानम्' इत्यस्य स्थाने 'एकं महान्तमात्मानं' ई.

बहुधा मेधाविनो वदन्ति । इन्द्रं मित्रं वरुणम् अग्निं दिव्यं च गरुत्मन्तम् । दिव्यः दिविजः । [1]गरुत्मान् गरणवान् । [2]गुर्वात्मा महात्मा इति वा । यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते अयमेव सोऽग्निः । निपातमेव एते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ( महा० १८ ॥ गु० ५ अथवा २३ तृतीयः पादः । दुर्गवृत्तौ द्वादशस्य चतुर्थः पादः ) ।

जातवेदाः कस्मात् । जातानि वेद । जातानि वा एनं विदुः । जाते जाते विद्यते इति वा । जातवित्तो वा । जातधनः[3] । जातविद्यो वा । जातप्रज्ञानः[4] । यत्तज्जातः पशून् अविन्दत[5] तज्जातवेदसो जातवेदस्त्वम् ( मैत्रा० सं० १।८।२ ) इति[6] ब्राह्मणम् । तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पन्ति ( मैत्रा० सं० १।८।२ ) इति च । तस्य एषा भवति ( महा० १९ ॥ गु० १ अथवा २४ ) ।

प्र[7] नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे ( ऋ० सं० १०।१८८।१ ) ॥ प्रहिणुत जातवेदसं कर्मभिः समश्नुवानम् । अपि[8] वा । उपमार्थे स्यात् । अश्वमिव जातवेदसम्[9] इति । इदं नो बर्हिः आसीदतु[10] इति । तदेतत् एकम् एव[11] जातवेदसं गायत्रं तृचं दशतयीषु विद्यते । यत्तु किंचित् आग्नेयं तत् जातवेदसानां स्थाने युज्यते । स न मन्येत अयमेव अग्निः इति । अपि एते उत्तरे ज्योतिषी जातवेदसौ[12] उच्येते । ततो नु

---

१ 'सुपर्णः सुपतनः गुरुत्मान्' इ. २ गुर्वात्मा महात्मा इति वा' ई. ३ 'जातधनो वा' सायणः. ४ जातप्रज्ञो वा' सायणः ५ '°विन्दतेति°' इ। ओ. ६ 'इति हि ब्राह्मणम्' सायणः.

७ ' जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः (ऋ.सं.१।९९।१) ॥

जातवेदस इति जातवेदस्यां वेवं जातवेदसेऽर्चाय सुनवाम सोममिति प्रसवाभिषवाय् सोमं राजानममृतमरातीयतो यज्ञार्थमनिस्मो निदहाति निश्चयेन दहति भस्मीकरोति सोमो ददादित्यर्थः । स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति तस्यैषापरा भवति । इति अधिकः खण्डो गुर्जरपाठे ( २ अथवा २५ ) एव । स निरुक्ते १४।३३ इत्यत्र वर्तते. ८ 'अथवा' इ. ९ 'जातवेदसम्' ई. १० 'आसीदत्' इ. ११ 'इव' अ. १२ 'जातवेदसी' ओ.

मध्यमः । आभि प्रवन्त समनेव योषाः ( ऋ० सं० ४।५८।८ ) इति । तत्पुरस्तात् व्याख्यातम् ( निरु० ७।१७ ) । अथ असौ आदित्यः । उदु त्यं जातवेदसम् (ऋ० सं० १।५०।१) इति । तदुपरिष्टात् व्याख्यास्यामः (निरु० १२।१५ ) । यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते अयमेव सोऽग्निर्जातवेदाः । निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते ( महा० २०॥ गु० ३ अथवा २६ चतुर्थः पादः । दुर्गवृत्तौ द्वादशस्य पञ्चमः पादः ) ।

वैश्वानरः ( ३ ) कस्मात् । विश्वान् नरान् नयति । विश्वे एनं नराः नयन्ति इति वा । अपि वा । विश्वानर एव स्यात् । प्रत्यृतः सर्वाणि भूतानि । तस्य वैश्वानरः । तस्य एषा भवति ( महा० २१ ॥ गु० १ अथवा २७ ) ॥

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ( ऋ० सं० १।९८।१ ) ॥ इतो जातः सर्वमिदम् अभिविपश्यति । वैश्वानरः संयतते सूर्येण । राजा यः सर्वेषां भूतानाम् अभिश्रयणीयः तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम । तत्को वैश्वानरः । मध्यमः इति आचार्याः । वर्षकर्मणा हि एनं स्तौति ( महा० २२ ॥ गु० २ अथवा २८ ) ।

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचन्ते ।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शम्बरं भेत् ( ऋ० सं० १।५९।६ ) ॥ प्रब्रवीमि तत् महित्वं माहाभाग्यं वृषभस्य वर्षितुः अपां यं पूरवः पूरयितव्याः मनुष्याः वृत्रहणं मेघहनं सचन्ते सेवन्ते वर्षकामाः । दस्युः दस्यतेः क्षयार्थात् । उपदस्यन्ति अस्मिन् रसाः । उपदासयति कर्माणि । तम् अग्निर्वैश्वानरो घ्नन् अवाधूनोत् अपः काष्ठाः । अभिनत् शम्बरं मेघम् । अथ असौ आदित्यः इति पूर्वे याज्ञिकाः (गु० ३ अथवा २९) । एषां लोकानां रोहेण सवनानां रोहः आम्नातः । रोहात् प्रत्यवरोहः चिकीर्षितः । ताम् अनुकृतिं होता आग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते

१ 'वैश्वानरः' ई. २ 'आश्रयणीयः' इ. ३ 'तत्' ई. ४ 'दस्युः दस्यतेः क्षयार्थात्' ई. ५ 'कर्माणि वा । तं०' इ. ६ 'हतवान्' इ. ७ 'अत्र' ई. ८ 'अथ' ई.

(ऐ० ब्रा० १२।३)। सोऽपि न स्तोत्रियम् आद्रियेत। आग्नेयो हि भवति। ततः आगच्छति मध्यस्थाना: देवताः रुद्रं च मरुतश्च। ततः अग्निम् इहस्थानम्। अत्रैव स्तोत्रियं शंसति (गु० ४ अथवा ३०)। अथापि वैश्वानरीयो द्वादशकपालो भवति। एतस्य हि द्वादशविधं कर्म। अथापि ब्राह्मणं भवति। असौ वा आदित्योऽग्निर्वैश्वानरः (मैत्रा० सं० २।१।२) इति। अथापि निवित् सौर्यवैश्वानरी भवति। आ यो द्यां भात्या पृथिवीम् (निवित् ८) इति। एष हि द्यावापृथिव्यौ आभासयति। अथापि छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति। दिवि पृष्टो अरोचत (आश्व० श्रौ० ८।१०) इति। एष हि दिवि पृष्टो अरोचत। इति। अथापि हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति (गु० ५ अथवा ३१)। अयमेव अग्निः वैश्वानरः इति शाकपूणिः। विश्वानरौ एते उत्तरे ज्योतिषी। वैश्वानरः अयम् यत् ताभ्यां जायते कथं नु अयम् एताभ्यां जायते इति। यत्र वैद्युतः शरणम् अभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद्भवति। उदकेन्धनः शरीरोपशमनः। उपादीयमानः एव अयं संपद्यते। उदकोपशमनः शरीरदीप्तिः (गु० ६ अथवा ३२)। अथ आदित्यात्। उदीचि प्रथमसमावृत्ते आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयम् असंस्पर्शयन् धारयति तत् प्रदीप्यते। सः अयमेव संपद्यते। अथापि आह। वैश्वानरो यतते सूर्येण (ऋ० सं० १।९८।१) इति। न च पुनरात्मना आत्मा संयतते। अन्येनैव अन्यः संयतते। इतः इमम् आदधाति। अमुतः अमुष्य रश्मयः प्रादुर्भवन्ति। इतः अस्य अर्चिषः। तयोःभासोः संसङ्गं दृष्ट्वा एवमवक्ष्यत् (गु० ७ अथवा ३३)। अथ यानि एतानि औत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा पौष्णानि वा वैष्णवानि वा तेषु वैश्वानरीयाः प्रवादाः अभविष्यन्। आदित्यकर्मणा च एनम् अस्तोष्यन्। इति उदेषि। इति अस्तमेषि। इति विपर्येषि। इति। आग्नेयेषु एव हि सूक्तेषु वैश्वानरीयाः प्रवादाः

१ 'च' इ. २ 'इत्यप्येते' ओ. ३ 'दनुपात्तो॰' अ. ४ 'उदीचीनाय॰' एकस्मिन् उत्तमगुर्जरवृत्तिपुस्तके. ५ 'तथाप्याह' अ. ६ 'आत्मानं' ओ. ७ 'अवक्षत्' अ. ८ 'औत्तमकानि' अ. ९ 'वा सौर्याणि वा पौष्णानि' ओ. १० 'वा वैश्वदेवानि वा तेषु' ओ.

भवन्ति। अग्निकर्मणा च एनं स्तौति। इति[1] दहसि। इति वहसि। इति पचसि। इति। यथो एतत्। वर्षकर्मणा हि एनं स्तौति इति। अस्मिन्नपि एतदुपपद्यते (गु० ८ अथवा ३४)। समानमेतदुदकमुच्चैत्यव चाहभिः। भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः (ऋ० सं० १।१६४।५१)॥ इति सा[2] निगदव्याख्याता (महा० २३ ॥ गु० ९ अथवा ३५ पञ्चमः पादः॥ दुर्गवृत्तौ द्वादशस्य षष्ठः पादः)।

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति। त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवी व्युद्यते (ऋ०सं० १।१६४।४७)॥ कृष्णं निरयणं रात्रिः आदित्यस्य। हरयः सुपर्णाः। हरणाः आदित्यरश्मयः। ते यदा अमुतः अर्वाञ्चः[3] पर्यावर्तन्ते सहस्थानात् उदकस्य आदित्यात् अथ घृतेन उदकेन पृथिवी व्युद्यते। घृतम् (निघण्टु १।१२।१०) इति उदकनाम। जिघर्तेः सिञ्चतिकर्मणः। अथापि ब्राह्मणं भवति[4]। अग्निर्वा इतो वृष्टिं समीरयति[5]। धामच्छद् दिवि[6] भूत्वा वर्षति[7]। मरुतः सृष्टां वृष्टिं नयन्ति। यदासावादित्यो[8]ऽग्निं[9] रश्मिभिः पर्यावर्तते अथ वर्षति (काठक सं० ११।१०) इति। यथो एतत् रोहात् प्रत्यवरोहः चिकीर्षितः इति। आम्नायवचनात् एतत् भवति। यथो एतत् (गु० १ अथवा ३६)। वैश्वानरीयो द्वादशकपालो भवति इति। अनिर्वचनं कपालानि भवन्ति। अस्ति हि सौर्यः एककपालः पञ्चकपालश्च। यथो एतत्। ब्राह्मणं भवति इति। बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति। पृथिवी वैश्वानरः। संवत्सरो वैश्वानरः। ब्राह्मणो वैश्वानरः इति। यथो एतत्। निवित् सौर्यवैश्वानरी भवति इति। अस्यैव सा भवति। यो विड्भ्यो मानुषीभ्यो दीदेत् (निवित् ८) इति। एष हि विड्भ्यो मानुषीभ्यो दीप्यते[10]। यथो एतत्। छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति इति। अस्यैव तत् भवति। जमदग्निभिराहुतः[11] (आश्व० श्रौ० ८।९)

---

१ 'इति वहसि। इति पचासि। इति दहसि' ओ. २ 'सा निगदव्याख्याता' ई. ३ 'अर्वाञ्चः' ई. ४ 'भवाति' ई. ५ 'उदीरयति' काठके. ६ 'इव' अथवा 'एव' काठके। 'इव खलु वै भूत्वा' ओ. ७ 'वर्षति' ई. ८ 'यदा खलु वा असावादित्यः' ओ. ९ '°त्यो न्यङ्' ओ.। 'अर्वाङ्' काठके. १० 'दीदयति' अ. ११ 'राहूतः' अ.

इति । जमदग्नयः प्रजमिताग्नयः वा । प्रज्वलिताग्नयः वा । तैः अभिहुतः[1] भवति । यथो एतत् । हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवति इति । अस्य एव तत् भवति ( महा० २४ ॥ गु० २ अथवा ३७ ) ।

हविष्पान्तमजरं स्वर्विदि दिविस्पृश्याहुतं जुष्टमग्नौ । तस्य भर्मणे भुवनाय देवा धर्मणे कं स्वधया पप्रथन्त ( ऋ० १०।८८।१ )॥ हविः यत् पानीयम्[2] अजरं सूर्यविदि दिविस्पृशि अभिहुतं जुष्टम् अग्नौ तस्य भरणाय च भावनाय च धारणाय च एतेभ्यः सर्वेभ्यः[3] कर्मभ्यः इमम्[4] अग्निम् अन्नेन अपप्रथन्त । इति[5] । अथाप्याह ( महा० २५ ॥ गु० ३ अथवा ३८ ) ।

अपामुपस्थे महिषा अगृभ्णत विशो राजानमुप तस्थुर्ऋग्मियम् । १
आ दूतो अग्निमभरद्विवस्वतो वैश्वानरं मातरिश्वा परावतः ( ऋ० सं० ६।८।४ )॥ अपाम् उपस्थे उपस्थाने । महति अन्तरिक्षलोके आसीनाः[6] । महान्तः इति वा । अगृह्णत[7] माध्यमिकाः[8] देवगणाः । विशः इव राजानम् उपतस्थुः । ऋग्मियम् ऋग्मन्तम् इति[9] वा । अर्चनीयम् इति वा[10] । आहरत् यं दूतः देवानां विवस्वतः आदित्यात् । विवस्वान् विवासनवान् । प्रेरितवतः । १
परागताद्वा । अस्य[11] अग्नेः वैश्वानरस्य मातरिश्वानम् आहर्तारम् आह । मातरिश्वा वायुः । मातरि अन्तरिक्षे श्वसिति । मातरि आशु अनिति इति वा । अथ एनम् एताभ्यां सर्वाणि स्थानानि अभ्यापादं स्तौति ( महा० २६ ॥ गु० ४ अथवा ३९ ) ।

मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन् । २
मायामू तु यज्ञियानामेतामपो यत्तूर्णिश्चरति प्रजानन् ( ऋ० सं० १०।८८।६ )॥ मूर्धा मूर्तम् अस्मिन् धीयते । मूर्धा यः[12] सर्वेषां भूतानां

---

१ 'अभिहूतः' अ. २ 'पानीयं' ई. ३ 'सर्वेभ्यः' ई. ४ 'देवाः इमम्' ओ. ५ 'इति' ई. ६ 'सन्नाः' इ. ७ 'अगृह्णन्' इ. ८ 'माध्यमका' अ. ९ 'इति वा' ई. १० 'वा पूजनीयमिति वा' ओ. ११ 'अपि वा । अस्याग्नेः' ओ । 'अस्याग्नेः°° आह' ई. १२ 'यः' ई.

भवति नक्तम् अग्निः । ततः सूर्यो जायते प्रातः उद्यन् स एव । [1]प्रज्ञां तु एतां मन्यन्ते यज्ञियानां देवानां यज्ञसंपादिनाम् । अपः यत् कर्म [2]चरति प्रजानन् । सर्वाणि स्थानानि [3]अनुसंचरते त्वरमाणः । तस्य उत्तरा भूयसे निर्वचनाय ( महा० २७ ॥ गु० ५ अथवा ४० ) ।

स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् । तमू अकृण्वन् त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ( ऋ० सं० १०।८८।१० ) ॥ स्तोमेन हि[4]यं दिवि दे[5]वाः अग्निम् अजनयन् । [6]शक्तिभिः कर्मभिः । द्यावापृथिव्योः [7]आपूरणम् । तम् [8]अकुर्वन् त्रेधाभावाय । पृथिव्याम् अन्तरिक्षे दिवि इति शाकपूणिः । यदस्य दिवि तृतीयं तदसावादित्यः [9]इति ब्राह्मणम् । [10]तं तु अग्नीकृत्य स्तौति । अथ एनम् एतया आदित्यीकृत्य स्तौति ( महा० २८ ॥ गु० ६ अथवा ४१ ) ।

यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम् । यदा चरिष्णू मिथुनावभूतामादित्प्रापश्यन् भुवनानि विश्वा ( ऋ० सं० १०।८८।११ ) ॥ यदा एनम् अदधुः [11]यज्ञियाः [12]सर्वे दिवि देवाः सूर्यम् । [13]आदितेयम् अदितेः पुत्रम् । यदा चरिष्णू मिथुनौ प्रादुरभूताम् । सर्वदा सहचारिणौ । उषाश्च आदित्यश्च । मिथुनौ कस्मात् । मिनोतिः श्रयतिकर्मा । थु इति नामकरणः । थकारो वा । नयतिः परः । वनिः वा । समाश्रितौ अन्योन्यं नयतः । [14]वनुतो वा । मनुष्यमिथुनौ अपि एतस्मादेव । मेथन्तौ [15]अन्योन्यं [16]वनुतः [17]इति वा । अथ एनम् एतया अग्नीकृत्य स्तौति (महा० २९ ॥ गु० ७ अथवा ४२ ) ।

यत्रा वदेते अवरः परश्च यज्ञन्योः कतरो नौ वि वेद । आ शेकुरित्सधमादं सखायो नक्षन्त यज्ञं क इदं वि वोचत् ( ऋ० सं०

---

१ 'प्रज्ञां' ई. २ 'चराति' ई. ३ '°चरति' ओ. ४ 'यं हि' ओ। 'यं' ई. ५ 'देवासो' ओ. ६ 'शक्तिभिः' आ. ७ 'पूरणम्' अ. ८ अकुर्वन्' ई. ९ 'इति हि ब्राह्मणम्' ओ. १० 'तत्' ई. ११ 'यज्ञियासः' इ. १२ 'सर्वे' ई. १३ 'आदितेयम्' आ. १४ 'वनुतो वा' ई. १५ 'अन्योन्यं' ई. १६ 'नयतः' इ. १७ 'इति वा' ई.

१०।८८।१७ )॥ यत्र विवदेते दैव्यौ होतारौ । अयं च अग्निः असौ च
मध्यमः । कतरः नौ यज्ञे भूयः वेद इति । आशक्नुवन्ति[1] तत्[2] सहमदनं समान[3]-
ख्यानाः ऋत्विजः । तेषां यज्ञं समश्नुवानानां कः नः इदं विवक्ष्यति इति ।
तस्य उत्तरा भूयसे निर्वचनाय ( महा० ३० ॥ गु० ८ अथवा ४३ ) ।

यावन्मात्रमुषसो न प्रतीकं सुपर्ण्यो३ वसते मातरिश्वः । तावद्
धात्युप यज्ञमायन् ब्राह्मणो होतुरवरो निषीदन् ( ऋ० सं० १०।८८।१९)॥
यावन्मात्रम् उषसः प्रत्यक्तं भवति[4] । प्रतिदर्शनम्[5] इति वा । अस्ति उपमानस्य
संप्रत्यर्थे प्रयोगः । इहेव[6] निधेहि इति यथा । सुपर्ण्यः सुपतनाः । एताः रात्रयः।
वसते मातरिश्वन् ज्योतिः[7] वर्णस्य । तावत् उपदधाति[8] यज्ञम् आगच्छन्[9]
ब्राह्मणः होता अस्य[10] अग्नेः होतुः अवरः निषीदन् । होतृजपः[11] तु अनग्नि- १
वैश्वानरीयः भवति । देव सवितर् एतं त्वा वृणते अग्निं होत्राय सह पित्रा
वैश्वानरेण ( आश्व० श्रौ० १।३ ) इति । इमम् एव अग्निं सवितारम् आह ।
सर्वस्य प्रसवितारम् । मध्यमं वा उत्तमं वा पितरम् । यस्तु सूक्तं भजते यस्मै
हविः निरुप्यते अयम् एव सः अग्निः वैश्वानरः । निपातम् एव एते उत्तरे
ज्योतिषी एतेन नामधेयेन भजेते भजेते ( महा० ३१ ॥ गु० ९ अथवा ४४ १
सप्तमः पादः ॥ दुर्गवृत्तौ द्वादशाध्यायस्य सप्तमः पादः ) ।

इति निरुक्तोत्तरषट्के प्रथमोऽध्यायः समाप्तः ।

इति निरुक्ते सप्तमोऽध्यायः ।

---

१ 'अशक्नुवन्ति' इ. २ 'तत्' ई । सत् ओ. ३ 'समानाख्या°' ओ. ४ 'भवति' ई. ५ 'प्रति' ई. ६ 'इहैव' अ. ७ 'ज्योतिः वर्णस्य' ई. ८ 'उप' ई. ९ 'उपायन्' इ. १० 'अस्य' ई. ११ 'होतृजपस्त्वनग्निर्वैश्वानरीयो' ओ. । 'होतृजपस्त्वमग्निर्वैश्वानरीयो' अ. । होतृजपस्त्वनग्नि-र्वैश्वानरीयो' इत्यत्र 'वैं' अक्षरस्योपरि वर्तमानो रफारः शुद्धीकरणे अपाक्रियते एकस्मिन् उत्तम-गुर्जरवृत्तिपुस्तके.

# अष्टमोऽध्यायः

द्रविणोदाः ( निघ० ५।२।१ ) कस्मात् । धनं द्रविणम् ( निघ० २।१०।२५ ) उच्यते । यत् एनत्[1] अभिद्रवन्ति । बलं वा द्रविणम् ( निघ० २।९।२६ ) । यत् एतेन अभिद्रवन्ति । तस्य दाता द्रविणोदाः । तस्य एषा भवति (१) ।

**द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते**[2] ( ऋ० सं० १।१५।८ ) ॥ द्रविणोदाः यः त्वम्[3] । द्रविणसः इति द्रविणसादिनः इति वा । द्रविणसानिनः इति वा । द्रविणसः तस्मात् पिबतु इति वा । **यज्ञेषु देवमीळते** । याचन्ति । स्तुवन्ति । वर्धयन्ति । पूजयन्ति इति वा । तत् कः द्रविणोदाः । इन्द्रः इति क्रौष्टुकिः । स बलधनयोः दातृतमः । तस्य च सर्वा बलकृतिः । **ओजसो जातमुत मन्य एनम्** ( ऋ० सं० १०।७३।१० ) इति च आह । अथापि अग्निं द्राविणोदसम् आह । एषः पुनः एतस्मात् जायते । **यो अश्मनोरन्तरग्निं जजान** ( ऋ० सं० २।१२।३ ) इत्यपि निगमः भवति । अथापि ऋतुयाजेषु द्राविणोदसाः प्रवादाः भवन्ति । तेषां[4] पुनः पात्रस्य इन्द्रपानम् इति भवति[5] । अथापि एनं सोमपानेन स्तौति । अथापि आह । **द्रविणोदाः पिबतु द्राविणोदसः** ( ऋ० सं० २।३७।४ ) इति ( गु० २ ) । अयम एव अग्निः द्रविणोदाः इति शाकपूणिः । आग्नेयेषु एव हि सूक्तेषु द्राविणोदसाः प्रवादाः भवन्ति । **देवा अग्निं धारयन् द्रविणोदाम्** ( ऋ० सं० १।९६।१ ) इत्यपि निगमः भवति । यथो एतत् । स बलधनयोः दातृतमः इति । सर्वासु देवतासु ऐश्वर्यं विद्यते । यथो एतत् । **ओजसो जातमुत मन्य एनम्** । इति च आह इति । अयम् अपि अग्निः ओजसा बलेन मथ्यमानः जायते । तस्मात् एनम् आह सहसः पुत्रं ( ऋ० सं० २।७।६ ) सहसः सूनुं ( ऋ० सं० ८।७५।३ ) सहसः यहुं ( ऋ० सं० १।७९।४ ) ।

---

१ 'एनं' अ. २ '°मीलते' अ. ३ 'तम्' इ. ४ 'तेषां पुनः' ई. ५ 'भवति समाख्या' इ.

यथो एतत् । अग्निं द्राविणोदसम् आह इति । ऋत्विजः अत्र द्रविणोदसः उच्यन्ते । हविषः दातारः । ते च एनं जनयन्ति । ऋषीणां पुत्रो अधिराज एषः ( मैत्रा० सं० १।२।७ ) इत्यपि निगमः भवति । यथो एतत् । तेषां पुनः पात्रस्य इन्द्रपानम् इति भवति इति । भक्तिमात्रं तत् भवति । यथा वायव्यानि इति सर्वेषां सोमपात्राणाम् ( मैत्रा० सं० ४।५।८ ) । यथो एतत् । सोमपानेन एनं स्तौति इति । अस्मिन् अपि एतत् उपपद्यते । सोमं पिब मन्दसानो गणश्रिभिः ( ऋ० सं० ५।६०।८ ) इति । यथो एतत् । द्रविणोदाः पिबतु द्राविणोदसः । इति । अस्य एव तत् भवति ( महा० २ ॥ गु० ३ ) ।

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन् वीळयस्वा वनस्पते । १
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः ( ऋ० सं० २।३७।३ ) ॥ मेद्यन्तु ते वह्नयः । वोढारः । यैः यासि अरिष्यन् । दृढीभव । आयूय धृष्णो अभिगूर्य त्वं नेष्ट्रीयात् धिष्ण्यात् । धिष्ण्यः धिषण्यः धिषणाभवः । धिषणा वाक् । धिषेः दधात्यर्थे । धीसादिनी इति वा । धीसानिनी इति वा । वनस्पते इति एनम् आह । एष हि १
वनानां पाता वा पालयिता वा । वनं वनोतेः । पिब ऋतुभिः कालैः ( महा० ३ ॥ गु० ४ प्रथमः पादः ) ।

अथ अतः आप्रियः । आप्रियः कस्मात् । आप्नोतेः । प्रीणातेः वा । आप्रीभिराप्रीणाति ( ऐत० ब्रा० ६।४ ) इति च ब्राह्मणम् । तासाम् इध्मः (२) प्रथमागामी भवति । इध्मः समिन्धनात् । तस्य एषा भवति ( महा० ४ ॥ २
गु० १ अथवा ४ ) ।

समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः । आ

---

१ 'तेषां पुनः' ई. २ 'समाख्या भवति' इ. ३ 'भवति तत्' इ. ४ 'इत्यपि निगमो भवति' ओ. ५ 'वीळय०' अ. ६ 'वोह्लारः' अ. ७ 'गच्छसि' इ. ८ 'अरिषण्यन्' इ. ९ 'दृह्लीभव' अ. १० 'धिषणाभवः' ई. ११ 'वाक्' आ. १२ 'पिपर्तुभिः' ओ. १३ 'कालैः । यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्द्रविणोदाः । निपातमेवैतन्मध्यमं ज्योतिरेतेन नामधेयेन भजेत' इ. १४ 'इति च ब्राह्मणम्' ई. १५ 'इध्मः समिन्धनात्' ई.

च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ( ऋ० सं० १०।११०।१ )॥ समिद्धः अद्य मनुष्यस्य मनुष्यस्य गृहे देवः देवान् यजसि जातवेदः । आ च वह मित्रमहः । चिकित्वान् चेतनावान् । त्वं दूतः कविः असि । प्रचेताः प्रवृद्धचेताः । यज्ञेध्मः इति कात्थक्यः[1] । अग्निः इति शाकपूणिः । तनूनपात् ( ३ ) आज्यं भवति । नपात् इति अननन्तरायाः प्रजायाः नामधेयम् । निर्णततमा भवति । गौः अत्र तनूः उच्यते । ततः अस्यां भोगाः । तस्याः पयः जायते । पयसः आज्यं जायते । अग्निः इति शाकपूणिः । आपः अत्र तन्वः उच्यन्ते । ततः अन्तरिक्षे । ताभ्यः ओषधिवनस्पतयः जायन्ते । ओषधिवनस्पतिभ्यः एष जायते । तस्य एषा भवति (महा० ५ ॥ गु० २ अथवा ६ )।

तनूनपात्पथ ऋतस्य यानान्मध्वा समञ्जन्त्स्वदया सुजिह्व । मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नः ( ऋ० सं० १०।११०।२ )॥ तनूनपात् पथः ऋतस्य यानान् । यज्ञस्य यानान् । मधुना[2] समञ्जन् स्वदय कल्याणजिह्व[3] । मननानि च नः धीभिः यज्ञं च समर्धय । देवान् नः यज्ञं गमय । नराशंसः ( ४ ) यज्ञः इति कात्थक्यः । नराः अस्मिन् आसीनाः शंसन्ति । अग्निः इति शाकपूणिः । नरैः प्रशस्यः भवति । तस्य एषा भवति ( महा० ६ ॥ गु० ३ अथवा ७ )।

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः । ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ( ऋ० सं० ७।२।२ )॥ नराशंसस्य महिमानम् एषाम् उपस्तुमः यज्ञियस्य यज्ञैः । ये सुकर्माणः शुचयः । धियः[4] धारयितारः । स्वदयन्तु[5] देवाः उभयानि हवींषि सोमं च इतराणि च इति वा । तान्त्राणि च आवापिकानि च इति वा ईळः[6] (५) ईट्टेः स्तुतिकर्मणः । इन्धतेः वा । तस्य एषा भवति ( महा० ७ । गु० ४ अथवा ८ )।

---

१ 'कात्छक्यः' अ. २ 'मधुना' ई. ३ 'कल्याणजिह्व' ई. ४ 'धियां' इ. ५ 'आस्वादयन्तु' इ. ६ 'इलः' अ.

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः । त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान् ( ऋ० सं० १०।११०।३ )॥ आहूयमानः ईळितव्यः[1] वन्दितव्यश्च[2] आयाहि अग्ने वसुभिः सहजोषणः । त्वं देवानाम् असि यह्व होता । यह्वः[3] ( निघ० ३।३।१२ ) इति महतः नामधेयम् । यातश्च हूतश्च भवति । स एनान्यक्षीषितो यजीयान् । इषितः प्रेषितः इति वा । अधीष्टः इति वा । यजीयान् यष्टृतरः । वर्हिः[5] ( ६ ) परिवर्हणात् । तस्य एषा भवति ( महा० ८ ॥ गु० ५ अथवा ९ ) ।

प्राचीनं वर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् । व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ( ऋ० सं० १०।११०।४ ) ॥ प्राचीनं वर्हिः प्रदिशा पृथिव्याः वसनाय अस्याः प्रवृज्यते अग्रे अह्नां वर्हिः पूर्वाह्णे । तत् विप्रथते । वितरं वितीर्णतरम्[7] इति वा । विस्तीर्णतरम् इति वा । वरीयः वरतरम् । उरुतरं वा । देवेभ्यः च आदितये च स्योनम् । स्योनं ( निघ० ३।६।१५ ) इति सुखनाम । स्यतेः । अवस्यन्ति एतत् । सेवितव्यं भवति इति वा । द्वारः ( ७ ) जवतेः वा । द्रवतेः वा । वारयतेः वा । तासाम् एषा भवति ( महा० ९ ॥ गु० ६ अथवा १० )।

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः । देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः ( ऋ० सं० १०।११०।५ )॥ व्यञ्चनवत्यः उरुत्वेन विश्रयन्ताम् । पतिभ्यः इव जायाः ऊरू मैथुने धर्मे । शुशोभिषमाणाः । वरतमम्[9] अङ्गम् ऊरू । देव्यः द्वारः । बृहत्यः महत्यः । विश्वमिन्वाः । विश्वम् आभिः एति यज्ञे । गृहद्वारः[10] इति कात्थक्यः[11] । अग्निः इति शाकपूणिः । उषासानक्ता ( ८ ) उषाः च नक्ता च । उषाः व्याख्याता ( निरु० २।१८ ) । नक्ता ( निघ० १।७।१० ) इति रात्रिनाम । अनक्ति भूतानि अवश्यायेन । अपि वा । नक्ता अव्यक्तवर्णा । तयोः एषा भवति ( महा० १० । गु० ७ अथवा ११ ) ।

---

१ 'ईलितव्यः' अ । 'ईड्यः' इ. २ 'वन्द्यः' इ. ३ 'यह्वः०भवति' ई. ४ 'इति वा' ई. ५ 'वर्हिः' ई. ६ 'इति' ई. ७ 'विकीर्ण०' अ । 'विकीर्ण० इति वा' ई. ८ 'तत्' इ. ९ 'वरतरम्' अ. १० 'गृह० कात्थक्यः' ई. ११ 'कात्थक्यः' अ.

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ । दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ( ऋ० सं० १०।११०।६ ) ॥ सेष्मीयमाणे इति वा[1] । सुष्वापयन्त्यौ इति वा । आसीदताम् इति[2] वा । न्यासीदताम् इति वा । यज्ञिये । उपक्रान्ते । दिव्ये योषणे । बृहत्यौ[3] महत्यौ । सुरुक्मे सुरोचने । अधिदधाने शुक्रपेशसं श्रियम् । शुक्रं[4] शोचतेः ज्वलतिकर्मणः । पेशः ( निघ० ३।७।१० ) इति रूपनाम । पिंशतेः । विपिशितं भवति । दैव्या होतारा ( ९ ) दैव्यौ होतारौ । अयं च अग्निः । असौ च मध्यमः । तयोः एषा भवति ( महा० ११ ॥ गु० ८ अथवा १२ ) ।

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै । प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ( ऋ०सं० १०।११०।७ ) ॥ दैव्यौ होतारौ । प्रथमौ । सुवाचौ । निर्मिमानौ[5] यज्ञं मनुष्यस्य मनुष्यस्य[6] यजनाय । प्रचोदयमानौ । यज्ञेषु । कर्तारौ । पूर्वस्यां[7] दिशि यष्टव्यम् इति प्रदिशन्तौ । तिस्रो देवीः ( १० ) तिस्रः देव्यः । तासाम् एषा भवति ( महा० १२ ॥ गु० ९ अथवा १३ ) ।

आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती । तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ( ऋ० सं० १०।११०।८ ) ॥ एतु नः यज्ञं भारती क्षिप्रम् । भरतः आदित्यः । तस्य भाः । इळा[8] च । मनुष्यवत् इह चेतयमाना[9] । तिस्रः देव्यः बर्हिः इदं सुखं[10] सरस्वती च सुकर्माणः आसीदन्तु । त्वष्टा (११) तूर्णम् अश्नुते इति[11] नैरुक्ताः । त्विषेः वा स्यात्[12] दीप्तिकर्मणः[13] । त्वक्षतेः[14] वा स्यात् करोतिकर्मणः । तस्य एषा भवति ( महा० १३ ॥ गु० १० अथवा १४ ) ।

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा । तमद्य

१ 'इति वा' ई. २ 'इति ई. ३ 'बृहत्यौ' ई. ४ 'शक्रं°कर्मणः' ई. ५ 'यज्ञनिर्मातारौ' इ. ६ 'मनुष्यस्य' ई. ७ 'प्राच्यां' इ. ८ 'इला' अ. ९ 'चेतयन्ती' इ. १० 'सुखं' ई. ११ 'इति नैरुक्ताः' ई. १२ 'स्यात्' इ. १३ 'वृद्धिकर्मणः' ई. १४ 'तक्ष°'अ.

होतारिषितो यजीयान् देवं त्वष्टारमिमिह यक्षि विद्वान् ( ऋ० सं० १०।११०।९ ) ॥ यः इमे द्यावापृथिव्यौ जनयित्र्यौ रूपैः अकरोत् । भूतानि च सर्वाणि । तम् अद्य होतर् ईषितः यजीयान् देवं त्वष्टारम् इह यज विद्वान् । माध्यमिकः त्वष्टा इति आहुः । मध्यमे च स्थाने समाम्नातः ( निघ० ५।४।२१ ) । अग्निः इति शाकपूणिः । तस्य एषा अपरा भवति ( महा० १४ ॥ गु० ११ अथवा १५ ) ।

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे । उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ( ऋ० सं० १।९५।५)॥ आविः आवेदनात् । तत्त्यः । वर्धते चारुः आसु । चारु चरतेः । जिह्मं जिहीतेः । ऊर्ध्वः उच्छ्रितः भवति । स्वयशाः आत्मयशाः । उपस्थे उपस्थाने । उभे त्वष्टुर्बिभ्यतुर्जायमानात् । द्यावापृथिव्यौ इति वा । अहोरात्रे इति वा । अरणी इति वा । प्रत्यक्ते । सिंहं सहनम् । प्रत्यासेवेते ( महा० १५ ॥ गु० १२ अथवा १६ द्वितीयः पादः ) ।

वनस्पतिः (१२) व्याख्यातः ( निरु० ८।३ ) । तस्य एषा भवति ( महा० १६ ॥ गु० १ अथवा १७ ) ।

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि । वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन ( ऋ० सं० १०।११०।१० ) ॥ उपावसृज आत्मना आत्मानं समञ्जन् देवानाम् अन्नम् ऋतौ ऋतौ हवींषि काले काले । वनस्पतिः शमिता देवः अग्निः इति एते त्रयः स्वदयन्तु हव्यं मधुना च घृतेन च । तत् कः वनस्पतिः । यूपः इति कात्थक्यः । अग्निः इति शाकपूणिः । तस्य एषा अपरा भवति ( महा० १७ ॥ गु० २ अथवा १८ ) ।

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन । यदूर्ध्व-

१ 'इषितः यजयिन् त्वष्टारम्' ई. २ 'माध्यमकः' अ. ३ चारु चरतेः । 'जिह्मं° भवति' ई. ४ 'उच्छ्रतः' अ. ५ 'उभे° प्रतिजोषयेते' अयम् उत्तरार्धः स्वररहितः महाराष्ट्रपाठे वर्तते. ६ 'प्रत्यञ्चिते' इ. ७ 'त्मन्या' अ. ८ 'हव्यं' ई. ९ 'काच्छक्यः' अ. १० 'अग्निः इति शाकपूणिः' ई.

स्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थे ( ऋ० सं० ३।८।१ ) ॥ अञ्जन्ति त्वाम् अध्वरे देवान् कामयमानाः वनस्पते मधुना दैव्येन च[1] घृतेन च । यत् ऊर्ध्वः स्थास्यसि द्रविणानि च नः दास्यसि[2] । यत् वा[3] ते कृतः[4] क्षयः मातुः अस्याः उपस्थे उपस्थाने[5] । अग्निः इति शाकपूणिः । तस्य एषा अपरा भवति ( महा० १८ ॥ गु० ३ अथवा १९ ) ॥

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् । प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ( मैत्रा० सं० ४।१३।७ ) ॥ देवेभ्यः वनस्पते हवींषि । हिरण्यपर्ण ऋतपर्ण । अपि वा उपमार्थे स्यात् । हिरण्यवर्णपर्ण इति । प्रदिवः ते अर्थम् । पुराणः[6] ते सः अर्थः यं ते प्रब्रूमः । यज्ञस्य वह पथिभिः । रजिष्ठैः ऋजुतमैः । रजस्वलतमैः । तपिष्ठतमैः[7] इति वा[8] । तस्य एषा अपरा भवति ( महा० १९ ॥ गु० ४ अथवा २० ) ।

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् । वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः ( मैत्रा० सं० ४।१३।७ ) ॥ वनस्पते रशनया नियूय । सुरूपतमया । वयुनानि विद्वान् । प्रज्ञानानि प्रजानन् । वह देवान् यज्ञे[9] दातुः हवींषि । प्रब्रूहि च दातारम् अमृतेषु देवेषु । स्वाहाकृतयः ( १३ ) । स्वाहा ( निघ० १।११।२४ ) इति एतत् सु आह इति वा । स्वा वाक् आह इति वा । स्वं प्राह इति वा । स्वाहुतं हविः जुहोति इति वा । तासाम् एषा भवति ( महा० २० ॥ गु० ५ अथवा २१ ) ।

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः ( ऋ० सं० १०।११०।११ ) ॥ सद्यः जायमानः निरमिमीत यज्ञम् । अग्निः देवानाम् अभवत् पुरोगामी । अस्य होतुः प्रदिशि ऋतस्य वाचि आस्ये स्वाहाकृतं

---

१ 'च घृतेन च' ई. २ 'धास्यसि' अ. ३ 'वा' ई. ४ 'कृतः' ई. ५ 'उपरि' ई. ६ 'पुराणः० प्रब्रूमः' ई. ७ 'रजस्वलतमैर्वा' इ. ८ 'इति वा' ई. ९ 'यज्ञे' ई.

हविः अदन्तु देवाः[1]। इति इमाः आप्रीदेवताः अनुक्रान्ताः। अथ किंदेवताः प्रयाजानुयाजाः[2]। आग्नेयाः इति एके[3] ( महा० २१ ॥ गु० ६ अथवा २२ )।

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्। घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः (ऋ०सं०१०।५१।८) ॥ तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः। तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ( ऋ० सं० १०।५१।९ ) ॥ आग्नेया[4] वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणम्। छन्दोदेवताः[5] इति अपरम्। छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजा इति च ब्राह्मणम्। ऋतुदेवताः इति अपरम्। ऋतवो वै प्रयाजाः पशवो[6]ऽनुयाजा इति च ब्राह्मणम्। प्राणदेवताः इति अपरम्। प्राणा वै प्रयाजा अपाना[7] अनुयाजाः ( शत० ब्रा० ११।२।६।२७ ॥ कौषी० ब्रा० ७।१ ) इति च ब्राह्मणम्। आत्मदेवताः इति अपरम्। आत्मा वै प्रयाजाः प्रजा[8] अनुयाजाः ( तै० सं० ६।१।५ ) इति च ब्राह्मणम्। आग्नेयाः इति तु स्थितिः। भाक्तिमात्रम् इतरत्। किमर्थं पुनः इदम् उच्यते। यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन् ( ऐ० ब्रा० ११।८ ) इति ह विज्ञायते। तानि[9] एतानि एकादश आप्रीसूक्तानि। तेषां वासिष्ठम् आत्रेयं वाध्र्यश्वं गार्त्समदम् इति नाराशंसवन्ति[10]। मैधातिथं दैर्घतमसं प्रैषिकम् इति उभयवन्ति। अतः अन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ( महा० २२ ॥ गु० ७ अथवा २३ तृतीयः पादः। दुर्गवृत्तौ 'त्रयोदशस्य तृतीयः पादः' )।

अष्टमोऽध्यायः समाप्तः।

---

१ 'देवाः यजन्ति' ओ. २ 'प्रयाजाः' इ. ३ 'एके। आग्नेया वै प्रयाजा आग्नेया अनुयाजा इति च ब्राह्मणम्' इ. ४ 'आग्नेयाः° ब्राह्मणम्' ई. ५ 'छन्दोदेवता इत्येवमादि' उक्त्वा ब्राह्मणवचनानि दुर्गो न पठति. ६ 'ऋतवोऽनुयाजा इति च ब्राह्मणम्। पशुदेवता इत्यपरम्। पशवो वै प्रयाजाः पशवोऽनुयाजा इति च ब्राह्मणम्' ओ. ७ 'प्राणा वा अनुयाजा' ओ. ८ 'आत्मा वा अनुयाजाः' ओ. ९ 'इतीमानि एका°' इ. १० 'नराशंसवन्ति' केषुचित्पुस्तकेषु.

# नवमोऽध्यायः

अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तानि अतः अनुक्रमिष्यामः । तेषाम् अश्वः ( निघ० ५।३।१ ) प्रथमागामी भवति । अश्वः व्याख्यातः ( निरु० २।२७ ) । तस्य एषा भवति (१) ।

अश्वो वोह्ळा[1] सुखं रथं हसनामुपमन्त्रिणः । शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव (ऋ०सं० ९।११२।४)॥

अश्वः वोह्ळा सुखं वोह्ळा रथं वोह्ळा[2] । सुखम् इति कल्याणनाम । कल्याणं पुण्यम् । सुहितं भवति । सुहितं[3] गम्यति इति वा । हसैता वा । पाता वा पालयिता वा । शेपम् ऋच्छति इति । वारि वारयति । मा नो व्याख्यातः । तस्य एषा भवति (२)[4] ।

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् । यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ( ऋ० सं० १।१६२।१ ) ॥ यत् वाजिनः देवैः जातस्य[5] सप्तेः सरणस्य प्रवक्ष्यामः यज्ञे[6] वीर्याणि । मा नः त्वं मित्रः च वरुणः च अर्यमा च आयुः च वायुः । अयनः । इन्द्रः च उरुक्षयणः । ऋभूणां राजा इति वा । मरुतः च परिख्यन् । शकुनिः (२) शक्नोति उन्नेतुम् आत्मानम् । शक्नोति नदितुम् इति वा । शक्नोति तकितुम् इति वा । सर्वतः शंकरः अस्तु इति वा । शक्नोतेः वा । तस्य एषा भवति ( ३ ) ।

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ( ऋ० सं० २।४२।१ ) ॥ न्यक्रन्दीत् जन्म प्रब्रुवाणः । यथा अस्य शब्दः तथा नाम[7] । ईरयति[8] वाचम् ईरयिता इव नावम् । सुमङ्गलः च शकुने भव । कल्याणमङ्गलः[9] ।

---

१ 'वोह्ळा' अ. २ 'रथं वोह्ळा' आ । वोढा ओ. ३ 'सुहितं० वारयति' आ. ४ 'अश्वो वोह्ळेति द्वितयिः खण्डो दुर्गवृत्तौ नास्ति. ५ 'जनितस्य' इ. ६ 'यज्ञे विदथे' ओ. ७ 'नामेति' इ. ८ 'ईरयसि' इ. ९ 'कल्याणमङ्गलः' ई.

मङ्गलं गिरतेः गृणात्यर्थे । गिरति अनर्थान् इति वा । अङ्गलम् अङ्गवत् । मजयति पापकम् इति नैरुक्ताः । मां गच्छतु इति वा । मा च[1] त्वा काचित् । अभिभूतिः सर्वतः विदत् । गृत्समदम् अर्थम् अभ्युत्थितं कपिञ्जलः अभिववाशे । तदभिवादिनी एषा ऋक् भवति (४) ।

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल[2] ( खैलिके सूक्ते ३।१) ॥ इति सा निगदव्याख्याता । गृत्समदः गृत्सः[3] मदनः । गृत्सः ( निघ० ३।१५।३ ) इति मेधाविनाम । गृणातेः[4] स्तुतिकर्मणः । मण्डूकाः (२) मज्जूकाः । मज्जनात् । मदतेः वा मोदतिकर्मणः । मन्दतेः वा तृप्तिकर्मणः । मण्डयतेः इति वैयाकरणाः । मण्डः एषाम् ओकः इति वा । मण्डः[5] मदेः वा । मुदेः वा । तेषाम् एषा भवति (५) ।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ( ऋ० सं० ७।१०३।१ ) ॥ संवत्सरं शियानाः[6] ब्राह्मणाः व्रतचारिणः ब्रुवाणाः[7] । अपि वा । उपमार्थे स्यात् । ब्राह्मणाः इव व्रतचारिणः । इति । वाचं पर्जन्यप्रीतां[8] प्रावादिषुः मण्डूकाः । वसिष्ठः वर्षकामः पर्जन्यं तुष्टाव । तं मण्डूकाः अन्वमोदन्त । मण्डूकान् अनुमोदमानान् दृष्ट्वा तुष्टाव । तदभिवादिनी एषा ऋक् भवति (६) ।

उप प्रवद[9] मण्डूकि वर्षं मा वद तादुरि । मध्ये ह्रदस्य प्लवस्व विगृह्य चतुरः पदः ( खैलिकं सूक्तं १६ ) ॥ इति[10] सा निगदव्याख्याता । अक्षाः (४) । अश्नुवते एनान् इति वा । अभ्यश्नुवते एभिः इति वा । तेषाम् एषा भवति (७) ।

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृताना: । सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ( ऋ० सं० १०।३४।१ ) ॥ प्रवेपिणः मा[11] महतः विभीदकस्य फलानि मादयन्ति । प्रवातेजाः

---

१ 'च' ई. २ 'पश्चात्कपिञ्जल' ओ. ३ 'गृत्समदनः' ओ. ४ 'गृणातेः स्तुतिकर्मणः' ई. ५ 'मण्डः °मुदेः वा' ई. ६ 'शयानाः' अ. ७ 'अब्रुवाणाः' ओ. ८ 'पर्जन्यतर्पितां' इ. ९ 'प्रवद' अ. १० 'इति° व्याख्याता' ई. ११ 'मां' इ.

प्रवणेजाः[1] । इरिणे वर्तमानाः । इरिणं[2] निर्ऋणम् । ऋणातेः[3] । अपार्णं भवति[4] । अपरता अस्मात्[5] ओषधयः इति वा । सोमस्येव मौजवतस्य[7] भक्षः । मौजवतः मूजवति जातः । मूजवान् पर्वतः । मुञ्जवान् । मुञ्जः विमुच्यते इषीकया । इषीका इषतेः गतिकर्मणः । इयम् अपि इतरा इषीका एतस्मात् एव । विभीदकः विभेदनात् । जागृविः जागरणात् । मह्यम् अचच्छदत् । प्रशंसति एनान् प्रथमया । निन्दति उत्तराभिः । ऋषेः[6] अक्षपरिद्यूनस्य एतत् आर्षं वेदयन्ते । ग्रावाणः (५) हन्तेः वा । गृणातेः वा । गृह्णातेः वा । तेषाम् एषा भवति (८) ।

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः । यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ( ऋ० सं० १०।९४।१ ) ॥ प्रवदन्तु एते । प्रवदाम वयम् । ग्रावभ्यः वाचं वदत वदद्भ्यः । यत् अद्रयः पर्वताः । अदरणीयाः । सह सोमम् । आशवः क्षिप्रकारिणः[9] । श्लोकः शृणोतेः । घोषः[10] घुष्यतेः । सोमिनः यूयं स्थ इति वा । सोमिनः गृहेषु इति वा । येन नराः प्रशस्यन्ते स नाराशंसः (६) मन्त्रः । तस्य एषा भवति (९) ।

अमन्दान्त्स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य । यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ( ऋ० सं० १।१२६।१ ) ॥ अमन्दान् स्तोमान् । अबालिशान् । अनल्पान् वा । बालः[11] बलभर्ती[12] । भर्तव्यः भवति । अम्बा अस्मै अलं भवति इति वा । अम्बा अस्मै बलं भवति इति वा । बलः वा प्रतिषेधव्यवहितः । प्रभरे । मनीषया मनसः[13] ईषया । स्तुत्या । प्रज्ञया वा । सिन्धौ अधि निवसतः भावयव्यस्य राज्ञः । यः मे सहस्रं निरमिमीत सवान् । अतूर्तः राजा । अतूर्णः इति[14] वा । अत्वरमाणः इति वा । प्रशंसाम् इच्छमानः ( १० ॥ गु० प्रथमः पादः ) ।

---

१ 'प्रवतेजाः' अ. २ 'इरिणं निरिणं रिणातेः' अ. ३ 'ऋणातेः' ई. ४ 'वा' इ. ५ 'अस्मात्' ई. ६ 'ऋषेः °वेदयन्ते' ई. ७ '°द्यूतस्य' अ. ८ 'अश्नथि' इ. ९ 'क्षिप्रकारिणः' ई. १० 'घोषः घुष्यतेः' ई. ११ 'बालः °व्यवाहितः' ई. १२ 'बलवर्ती' ओ. १३ 'मनसः ईषया' ई. १४ 'इति वा । अत्वरमाणः इति वा' ई.

यज्ञसंयोगात् राजा स्तुतिं लभेत । राजसंयोगात् युद्धोपकरणानि । तेषां रथः (७) प्रथमागामी भवति । रथः रंहतेः गतिकर्मणः । स्थिरतेः वा स्यात् विपरीतस्य । रममाणः[1] अस्मिन् तिष्ठति इति वा । रपतेः वा[2] । तस्य एषा भवति ( महा० ११ ॥ गु० १ अथवा ११ ) ।

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीळ[3]यस्वास्थाता ते जयतु जेत्वानि (ऋ० सं० ६।४७।२६) ॥ वनस्पते दृढाङ्गः[4] हि भव । अस्मत्सखा प्रतरणः । सुवीरः कल्याणवीरः । गोभिः संनद्धः असि । वीळयस्व[5] इति संस्तम्भस्व[6] । आस्थाता ते जयतु जेतव्यानि । दुन्दुभिः (८) इति शब्दानुकरणम् । द्रुमः भिन्नः इति वा । दुन्दुभ्यतेः[7] वा स्यात् शब्दकर्मणः[8] । तस्य एषा भवति (महा० १२ ॥ गु० २ अथवा १२ ) ।

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् । स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् (ऋ० सं० ६।४७।२९ ) ॥ उपश्वासय पृथिवीं च[9] दिवं च । बहुधा[10] ते घोषं मन्यतां विष्ठितं[11] स्थावरम् । जङ्गमं च । यत्[12] स दुन्दुभे सहजोषणः इन्द्रेण च देवैः च दूरात् दूरतरम् अपसेध शत्रून् । इषुधिः (९) इषूणां निधानम् । तस्य एषा भवति ( महा० १३ ॥ गु०३ अथवा १३ ) ।

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनावगत्य । इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः (ऋ० सं० ६।७५।५) ॥ बहूनां[13] पिता[14] । बहुः अस्य[15] पुत्रः । इति[16] इषून् अभिप्रेत्य । प्रस्मयते इव अपाव्रियमाणः[17] । शब्दानुकरणं वा । सङ्काः सचतेः[18] । संपूर्वात् वा किरतेः । पृष्ठे निनद्धः जयति प्रसूतः इति[19] व्याख्यातम् । हस्तघ्नः (१०) हस्ते हन्यते । तस्य एषा भवति ( महा० १४ ॥ गु० ४ अथवा १४ ) ।

---

१ 'रममाणः °रपतेर्वा' ई. २ 'रपतेर्वा । रसतेर्वा' ओ ३ 'वीलय°' अ. ४ 'दृह्वाङ्गः' अ. ५ 'इति' ई. ६ 'संस्तभ्नुहि' इ. ७ दुन्दु० कर्मणः' ई. ८ 'वधकर्मणः' अ. ९ 'च' ई. १० 'बहुधा' ई. ११ 'विस्थितं' अ. १२ 'यत्' ई. १३ 'बह्वीनां' अ. १४ 'पाता' इ. १५ 'यस्य' इ. १६ 'इति इषून् अभिप्रेत्य' ई. १७ 'अवध्रीयमाणः' अ. १८'सचतेः ०किरतेः' ई. १९ 'इति व्याख्यातम्' ई.

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः । हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ( ऋ० सं० ६।७५।१४ ) ॥ अहिः इव भोगैः परिवेष्टयति बाहुम् । ज्यायाः वधात् परित्रायमाणः । हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् । पुमान् पुरुमनाः भवति[1] । पुंसतेः वा । अभीशवः (११) व्याख्याताः ( निरु० ३।९ ) । तेषाम् एषा भवति ( महा० १५ ॥ गु० ५ अथवा १५ ) ।

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः (ऋ० सं० ६।७५।६)॥ रथे तिष्ठन् नयति वाजिनः पुरस्तात् सतः । यत्र यत्र कामयते । सुषारथिः कल्याणसारथिः । अभीशूनां महिमानं पूजयामि[2] । मनः पश्चात् सन्तः[3] अनुयच्छन्ति रश्मयः । धनुः (१२) धन्वतेः गतिकर्मणः । वधकर्मणः वा । धन्वन्ति[4] अस्मात् इषवः । तस्य एषा भवति (महा० १६ ॥ गु० ६ अथवा १६) ।

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरप कामं कृणोति धन्वना सर्वाः प्रदिशो जयेम (ऋ०सं०६।७५।२) ॥ इति[5] सा निगदव्याख्याता । समदः सम् अदः वा । अत्तेः[6] । संमदः वा मदतेः[7] । ज्या (१३) जयतेः वा । जिनातेः वा । प्रजावयति[8] इषून् इति वा । तस्याः एषा भवति ( महा० १७ ॥ गु० ७ अथवा १७ ) ।

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधि धन्वन् ज्या इयं समने पारयन्ती (ऋ० सं० ६।७५।३) ॥ वक्ष्यन्ती इव आगच्छति कर्णम् । प्रियम् इव सखायम् इषुं परिष्वजमाना योषा इव शिङ्क्ते । शब्दं करोति । वितता अधिधनुषि ज्या इयम् । समने संग्रामे पारयन्ती । पारं नयन्ती । इषुः (१४) इषतेः गतिकर्मणः । वधकर्मणः वा । तस्य एषा भवति ( महा० १८ ॥ गु० ८ अथवा १८ ) ।

---

१ 'भवति' ई. २ 'पूजयत' अ. ३ 'सतः' अ. ४ 'धन्वन्ति अस्मात् इषवः' ई. ५ इति सा निगदव्याख्याता' ई. ६ 'अत्तेः' ई. ७ 'मदतेः' ई. ८ 'प्रजावयति० वा' ई.

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् (ऋ० सं० ६।७५।११)॥ सुपर्णं वस्ते इति वाजान् अभिप्रेत्य[1]। मृगमयः अस्याः दन्तः। मृगयतेः[2] वा। गोभिः संनद्धा पतति प्रसूता इति व्याख्यातम्[3]। यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्र अस्मभ्यम् इषवः शर्म यच्छन्तु शरणं संग्रामेषु[4]। अश्वाजनीं (१५) कशा इति आहुः। कशा प्रकाशयति भयम् अश्वाय। कृष्यतेः वा अणूभावात्। वाक् पुनः प्रकाशयति अर्थान्। क्रोशतेः वा। अश्वकशायाः एषा भवति (महा० १९॥ गु० ९ अथवा १९)।

आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते। अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय (ऋ० सं० ६।७५।१३)॥ आघ्नति[5] सानूनि एषाम्। सरणानि। सक्थीनि[6]। सक्थि सचतेः। आसक्तः अस्मिन् कायः। जघनानि च उपघ्नति[7]। जघनं जङ्घन्यतेः। अश्वाजनि प्रचेतसः[8]। प्रवृद्धचेतसः। अश्वान्। समत्सु समरणेषु संग्रामेषु। चोदय। उलूखलम् (१६) उरुकरं वा। ऊर्करं वा। ऊर्ध्वखं वा। उरु मे कुरु इत्यब्रवीत्तदुलूखलमभवत्। उरुकरं वैतत्[9]। तदुलूखलमित्याचक्षते परोक्षेण (शत० ब्रा० ७।५।१।२२) इति च ब्राह्मणम्। तस्य एषा भवति (महा० २०॥ गु० १० अथवा २०)।

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे। इह द्युमत्तमं वद जयतामिव दुन्दुभिः (ऋ० सं० १।२८।५)॥ इति सा निगदव्याख्याता[10] (महा० २१॥ गु० ११ अथवा २१ द्वितीयः पादः)।

वृषभः (१७) प्रजां वर्षति इति वा[11]। अतिवृहति रेतः इति वा। तत् वृषकर्मा वर्षणात् वृषभः। तस्य एषा भवति (महा० २२॥ गु० १ अथवा २२)।

न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः। तेन

---

१ 'इति वाजान् अभिप्रेत्य' ई. २ 'मृगयतेः वा' ई. ३ 'इति व्याख्यातम्' ई. ४ 'संग्रामे' इ. ५ 'आघ्नन्ति' ओ। आजङ्घ्नन्ति' इ. ६ 'सक्थिः' अ. ७ 'उपाजिघ्नति' इ. ८ 'प्रचेतसः' आ. ९ 'चैतदुलूखल' ओ। 'वैतदुलूखल' इ. १० 'इति सा निगदव्याख्याता' ई. ११ 'इति वा' ई.

सूर्भर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय (ऋ० सं० १०।१०२।५)॥ न्यक्रन्दयन् उपयन्तः एनम् इति व्याख्यातम्। अमेहयन् वृषभं मध्ये आजेः[1] आजयनस्य। आजवनस्य इति वा। तेन[2] सूभर्वं राजानम्। भर्वतिः (निघ० २।८।२) अत्तिकर्मा। तत् वा सूभर्वं सहस्रं गवाम्। मुद्गलः प्रधने जिगाय। प्रधनः इति संग्रामनाम। प्रकीर्णानि अस्मिन् धनानि भवन्ति। द्रुघणः (१८) द्रुमम[3]यः घनः। तत्र इतिहासम् आचक्षते। मुद्गलः भार्म्यश्वः ऋषिः वृषभं च द्रुघणं च युक्त्वा संग्रामे व्यवहृत्य आजिं जिगाय। तदभिवादिनी एषा ऋक् भवति (महा० २३॥ गु० २ अथवा २३)।

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम्। येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु (ऋ० सं० १०।१०२।९)॥ इमं तं पश्य वृषभस्य सहयुजं काष्ठायाः मध्ये द्रुघणं शयानम्। येन जिगाय शतवत् सहस्रं गवां मुद्गलः [4]पृतनाज्येषु। पृतनाज्य[5]म् (निघ० २।१७।९) इति संग्रामनाम। पृतनानाम् अजनात् वा। जयनात् वा। मुद्गलः मुद्गवान्। मुद्गगिलः वा[6]। मदनं गिलति इति वा। मदंगिलः वा। मुदंगिलः वा। भार्म्यश्वः भृम्यश्वस्य पुत्रः। भृम्यश्वः। भृमयः अस्य अश्वाः। अश्वभरणात् वा। पितुः (१९) इति अन्ननाम (निघ० २।७।६)। पातेः वा। पिबतेः वा। [7]प्यायतेः वा। तस्य एषा भवति (महा० २४॥ गु० ३ अथवा २४)।

पितुं नु स्तोषं महो धर्माणं तविषीम्। यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् (ऋ० सं० १।१८७।१)॥ तं पितुं स्तौमि महतः धारयितारं बलस्य। तविषी (निघ० २।९।१०) इति बलनाम। [8]तवतेः वृद्धिकर्मणः। यस्य त्रितः ओजसा बलेन। त्रि[9]तः त्रिस्थानः इन्द्रः। वृत्रं विपर्वाणं व्यर्दयति। नद्यः (२०) व्याख्याताः (निरु० २।२४)। तासाम् एषा भवति (महा० २५॥ गु० ४ अथवा २५)।

---

१ 'आजेः' आ. २ 'तेन तं सूभर्वम्' ओ. ३ 'द्रुमयः' इ. ४ 'पृतनाज्येषु इति व्याख्यातम्' इ. ५ 'पृतनाज्यः इति' अ. ६ 'वा' आ. ७ 'प्यायतेः वा' ई. ८ 'तवतेः वा वृद्धिकर्मणः' ओ. ९ 'त्रितः' ई.

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या। असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया (ऋ० सं० १०।७५।५)॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि स्तोमम् आसेवध्वम्। असिक्न्या च[1] सह मरुद्वृधे वितस्तया च[2] आर्जीकीये आशृणुहि सुषोमया च। इति समस्तार्थः। अथ एकपदनिरुक्तम्। गङ्गा गमनात्। यमुना प्रयुवती गच्छति इति वा। प्रवियुतं गच्छति इति वा। सरस्वती। सरः (निघ० १।१२।३८) इति उदकनाम। सर्तेः। तद्वती। शुतुद्री शुद्राविणी क्षिप्रद्राविणी। आशु तुन्ना इव द्रवति इति वा। इरावतीं परुष्णी इति आहुः। पर्ववती[3]। कुटिलगामिनी। असिक्नी अशुक्ला। असिता। सितम् इति वर्णनाम। तत्प्रतिषेधः असितम्। मरुद्वृधाः[4] सर्वाः नद्यः। मरुतः एनाः वर्धयन्ति। वितस्ता अविदग्धा। विवृद्धा[5]। महाकूला। आर्जीकीयां विपाट्[6] इति आहुः। ऋजीकप्रभवा[7] वा[8]। ऋजुगामिनी वा। विपाट् विपाटनात् वा। विपाशनात् वा। विप्रापणात्[9] वा। पाशा अस्यां व्यपाशन्त वसिष्ठस्य मुमूर्षतः। तस्मात् विपाट् उच्यते पूर्वमासीदुरुञ्जिरा॥ सुषोमा[10] सिन्धुः। यत् एनाम् अभिप्रसुवन्ति नद्यः। सिन्धुः स्यन्दनात्। आपः (२१) आप्नोतेः। तासाम् एषा भवति (महा० २६॥ गु० ५ अथवा २६)।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे (ऋ० सं० १०।९।१)॥ आपः हि[11] स्थ सुखभुवः। ताः नः अन्नाय धत्त[12]। महते च नः रणाय। रमणीयाय[13] दर्शनाय। ओषधयः (२२) ओषत् धयन्ति इति वा। ओषति एनाः धयन्ति इति वा। दोषं धयन्ति इति वा। तासाम् एषा भवति (महा० २७॥ गु० ६ अथवा २७)।

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहं शतं धामानि सप्त च (ऋ० सं० १०।९७।१)॥ याः ओषधयः पूर्वाः

१ 'च' ई. २ 'इति वा' ई. ३ 'पर्ववती भास्वती' ओ. ४ 'मरुद्वृधः' अ. ५ 'विवृद्धा वा' ई. ६ 'विपाळ्' ओ। 'विपाल्' अ. ७ 'ऋजूकप्रभवा' ओ. ८ 'वा' ई. ९ 'विप्रापणात् वा' ई. १० '°उरुञ्जिरा विप्रापणात् वा। सुषोमा' ई. ११ 'हि' ई. १२ 'धत्त' ई. १३ 'रमणीयाय च। द°' ओ.

जाताः देवेभ्यः [1]त्रीणि युगानि पुरा । [2]मन्ये नु तत् बभ्रूणाम् अहम् । बभ्रुवर्णानाम् । [3]हरणानाम् । भरणानाम् इति वा । शतं धामानि सप्त च[4] । धामानि[5] त्रयाणि भवन्ति । स्थानानि नामानि जन्मानि इति । जन्मानि[6] अत्र अभिप्रेतानि । सप्तशतं पुरुषस्य मर्मणाम् । तेषु एनाः दधति इति वा । रात्रिः (२३) व्याख्याता ( निरु० २।१८ ) । तस्याः एषा भवति ( महा० २८ ॥ गु० ७ अथवा २८ ) ।

आ रात्रि पार्थिवं रजः पितुरप्रायि[7] धामभिः । दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः ( खैलिके सूक्ते २५।१ ॥ अथर्व सं० १९।४७।१ ) ॥ आपूपुरः त्वं रात्रि पार्थिवं रजः स्थानैः मध्यमस्य । दिवः सदांसि । बृहती महती । वितिष्ठसे । आवर्तते त्वेषं तमः रजः[8] । अरण्यानी (२४) अरण्यस्य पत्नी । अरण्यम् अपार्णं ग्रामात् । अरमणं भवति इति वा । तस्याः एषा भवति ( महा० २९ ॥ गु० ८ अथवा २९ ) ।

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती३ँ ( ऋ० सं० १०।१४६।१ ) ॥ अरण्यानि[9] इति एनाम् आमन्त्रयते । या[10] असौ अरण्यानि वनानि पराची इव[11] नश्यसि । कथं ग्रामं न पृच्छसि[12] । न त्वा भीः विन्दति इव । [13]इति इवः परिभयार्थे वा । श्रद्धा (२५) श्रद्धानात् । तस्याः एषा भवति ( महा० ३० ॥ गु० ९ अथवा ३० ) ।

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः । श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ( ऋ० सं० १०।१५१।१ ) ॥ श्रद्धया अग्निः साधु समिध्यते । श्रद्धया हविः साधु हूयते । श्रद्धां भगस्य भागधेयस्य मूर्धनि प्रधानाङ्गे वचनेन आवेदयामः । पृथिवी (२६) व्याख्याता ( निरु० १।१३ ) । तस्याः एषा भवति ( महा० ३१ ॥ गु० १० अथवा ३१ ) ।

---

१ 'त्रीणि युगानि' ई. २ 'मन्ये नु तत्' ई. ३ 'भरणानाम् । हरणानाम् इति वा' अ । सायणश्च. ४ 'चेति' ओ. ५ 'स्थानानि नामानि जन्मानि । धामानि त्रयाणि भवन्ति' इ. ६ 'स्थानानि' अ. ७ 'पितुरः प्रायि' अथवा 'पितुरःप्रायु ओ. ८ 'रजः' ई. ९ 'अर° यते' ई. १० 'या' ई. ११ 'एव' इ. १२ '°पृच्छसि । न त्वा भीः मामिव विन्दति । न°' इ. १३ 'इति' ई.

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः (ऋ० सं० १।२२।१५) ॥ सुखा नः पृथिवि भव अनृक्षरा निवेशनी । ऋक्षरः कण्टकः । ऋच्छतेः । कण्टकः कंतपः वा[1] । कण्टतेः वा स्यात् गतिकर्मणः[2] । उद्गततमः[3] भवति । यच्छ नः शर्म[4] । येच्छन्तु[5] शरणम् । सर्वतः पृथु । अप्वा (२७) व्याख्याता (निरु० ६।१२) । तस्याः एषा भवति (महा० ३२ ॥ गु० ११ अथवा ३२) ।

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् (ऋ० सं० १०।१०३।१२) ॥ अमीषां चित्तानि[6] । प्रतिलोभयमाना[7] गृहाण अङ्गानि अप्वे । परेहि । अभिप्रेहि । निर्दह एषां हृदयानि शोकैः । अन्धेन अमित्राः तमसा संसेव्यन्ताम् । अग्नायी (२८) अग्नेः पत्नी । तस्याः एषा भवति (महा० ३३ ॥ गु० १२ अथवा ३३) ।

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये (ऋ० सं० १।२२।१२) ॥ इति[8] सा निगदव्याख्याता (महा० ३४ ॥ गु० १३ अथवा ३४ तृतीयः पादः) ।

अथ अतः अष्टौ द्वन्द्वानि । उलूखलमुसले[9] (२९) उलूखलं व्याख्यातम् (निरु० ९।२०) । मुसलं मुहुः सरम् । तयोः एषा भवति (महा० ३५ ॥ गु० १३ अथवा ३५) ।

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः । हरी इवान्धांसि बप्सता (ऋ० सं० १।२८।७) ॥ आयष्टव्ये अन्नानां संभक्ततमे ते हि उच्चैः विह्रियेते हरी इव अन्नानि भुञ्जाने । हविर्धाने (३०) हविषां निधाने । तयोः एषा भवति (महा० ३६ ॥ गु० २ अथवा ३६) ।

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये

---

१ 'कंतपः वा' ई । 'कंतपः वा । कृन्तते: वा । कण्ट०' ओ. २ 'स्यात् गतिकर्मणः' ई. ३ 'उद्गततरः' अ. ४ '°शर्म शरणम्° सायणः'. ५ 'यच्छन्तु शरणम्' ई. ६ 'चित्तानि प्रज्ञानानि' ओ. ७ 'प्रतिलोभयन्ती' इ. ८ 'इति सा निगदव्याख्याता' ई. ९ 'उलूखलमुसले' आ.

( ऋ० सं० २।४१।२१ ) ॥ आसीदन्तु वाम् उपस्थम्[1] उपस्थानम् अद्रोग्धव्ये[2] यज्ञियाः देवाः । यज्ञसंपादिनः । इह अद्य सोमपानाय । द्याव्यापृथिव्यौ व्याख्याते ( निरु० ११३ ) । तयोः एषा भवति ( महा० ३७ ॥ गु० ३ अथवा ३७ ) ।

द्यावा॑ नः पृथि॒वी इ॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृश॑म् । य॒ज्ञं दे॒वेषु॑ यच्छताम् ( ऋ० सं० २।४१।२० ) ॥ द्यावापृथिव्यौ नः इमं साधनम् अद्य दिविस्पृशं यज्ञं देवेषु नियच्छताम् । विपाट्छुतुद्र्यौ (३२) व्याख्याते ( निरु० ९।२६ ) । तयोः एषा भवति ( महा० ३८ ॥ गु० ४ अथवा ३८ ) ।

प्र पर्वता॑नामुश॒ती उ॒पस्था॒दश्वे॑ इव॒ विषि॑ते हास॑माने । गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे विपा॑ट्छुतुद्री पय॑सा जवेते ( ऋ० सं० ३।३३।१ ) ॥ पर्वतानाम् उपस्थात् उपस्थानात् उशत्यौ कामयमाने अश्वे इव । विमुक्ते इति वा । विषण्णे इति वा । हासमाने । हासतिः[3] स्पर्धायाम् । हर्षमाणे वा । गावौ इव शुभ्रे[4] शोभने । मातरौ[5] संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते । आर्त्नी (३३) अर्तन्यौ वा । रण्यौ वा । रिषण्यौ वा । तयोः एषा भवति ( महा० ३९ ॥ गु० ५ अथवा ३९ ) ।

ते आ॒चर॑न्ती॒ सम॑नेव॒ योषा॑ मा॒तेव॑ पु॒त्रं बि॑भृताम॒पस्थे॑ । अप॒ शत्रू॑न् विध्यतां संविदा॒ने आर्त्नी॑ इ॒मे वि॑ष्फुर॒न्ती अ॒मित्रा॑न् ( ऋ० सं० ६।७५।४ ) ॥ ते आचरन्त्यौ समनसौ इव योषे[6] माता इव पुत्रं बिभृताम् उपस्थे उपस्थाने । अपविध्यतां[7] शत्रून् संविदाने आर्त्न्यौ[8] इमे विघ्नत्यौ अमित्रान् । शुनासीरौ (३४) । शुनः वायुः । शु एति अन्तरिक्षे । सीरः आदित्यः । सरणात् । तयोः एषा भवति ( महा० ४० ॥ गु० ६ अथवा ४० ) ।

शुना॑सीराव॒िमां वाचं॑ जुषेथां॒ यद्दि॒वि च॒क्रथुः॒ पयः॑ । तेने॒मामुप॑ सिञ्चतम् ( ऋ० सं० ४।५७।५ ) ॥ इति[9] सा निगदव्याख्याता । देवी जोष्ट्री

१ 'उपस्थ उप॰' अ. २ 'अद्रोग्धव्ये' आ । अद्रोग्धव्ये इति वा' ओ. ३ 'स्पर्धमाने हर्ष॰' इ. ४ 'शुभ्रे' आ. ५ 'संमातरौ रिहाणे' अ. ६ 'योषिते' इ. ७ ' अपशत्रून् विध्यतां' अ. ८ 'आर्त्न्यौ इमे त्रिघ्नत्यौ' ई. ९ 'इति सा निगदव्याख्याता' ई.

(३५) देव्यौ जोषयित्र्यौ । द्यावापृथिव्यौ इति[1] वा । अहोरात्रे इति[2] वा । सस्यं च समा च इति [3]कात्थक्यः । तयोः एषः संप्रैषः भवति ( महा० ४१ ॥ गु० ७ अथवा ४१ ) ।

देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि । [4]यूयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ( मैत्रा० सं० ४।१३।८ ॥ तै० ब्रा० ३।६।१३) ॥ देवी जोष्ट्री देव्यौ जोषयित्र्यौ वसुधान्यौ[5] । ययोः अन्या अघानि द्वेषांसि अवयावयति । आवहति अन्या वसूनि [6]वरणीयानि यजमानाय वसुवननाय च वसुधानाय च । वीतां पिबेताम् । कामयेतां वा । यज इति संप्रैषः । देवी ऊर्जाहुती (३६) देव्यौ ऊर्जाह्वान्यौ । द्यावापृथिव्यौ इति वा । अहोरात्रे इति वा । सस्यं च समा च इति कात्थक्यः । तयोः एष संप्रैषः भवति ( महा० ४२ ॥ गु० ८ अथवा ४२ ) ।

देवी ऊर्जाहुती इषमूर्जमन्या[7] वक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ( मैत्रा० सं० ४।१३।८ ॥ तै० ब्रा० ३।६।१३ ) ॥ देवी ऊर्जाहुती देव्यौ ऊर्जाह्वान्यौ । अन्नं च रसं च [8]आवहति अन्या । सहजग्धिं[9] च सहपीतिं[10] च अन्या । नवेन पूर्वं दयमानाः स्याम । पुराणेन नवम् । ताम् ऊर्जम् ऊर्जाहुती ऊर्जयमाने अधातां वसुवननाय च वसुधानाय च । वीतां पिबेताम् । कामयेतां वा । यज इति संप्रैषः । यज इति संप्रैषः ( महा० ४३ ॥ गु० १० अथवा ४३ चतुर्थः पादः ) ।

नवमोऽध्यायः समाप्तः ।

---

१ 'इति वा' ई. २ 'इति' ई. ३ 'काच्छक्यः' अथवा 'काछक्यः' अ. ४ 'युयव०' ओ. ५ 'वसुधिती वसुधान्यौ' ओ. ६ 'वननीयानि' अ. ७ 'इषं' इ. ८ 'आवहति आवहति' ओ. ९ 'सहसग्धिं' अ । 'सहजग्धिं' ई. १० 'सहसपीतिं' अ । 'सहपीतिं' ई.

# दशमोऽध्यायः

अथ अतः मध्यस्थानाः देवताः। तासां वायुः ( निघ० ५।४।१ ) प्रथमागामी भवति। वायुः वातेः। वेतेः वा स्यात् गतिकर्मणः। एतेः इति स्थौलाष्ठीविः। अनर्थकः वकारः। तस्य एषा भवति (१)।

वायवा याहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम् ( ऋ० सं० १।२।१ )॥ वायो आयाहि दर्शनीय। इमे सोमाः अरंकृताः। [1]अलंकृताः। तेषां पिब। शृणु नः [2]ह्वानम्। इति। कम् अन्यं मध्यमात् एवम् [3]अवक्ष्यत्। तस्य एषा अपरा भवति (२)।

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः। अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं वि दस्येत् ( ऋ०सं० ६।३७।३ )॥ आससृवांसः अभिबलायमानम् इन्द्रं कल्याणचक्रे रथे योगाय रथ्याः अश्वाः। [4]रथस्य [5]वोढारः। ऋज्यन्तः ऋजुगामिनः। अन्नम् अभिवहेयुः नवं च[6] पुराणं च। श्रवः ( निघ० २।७।४ ) इति अन्ननाम। श्रूयते [7]इति सतः। वायोः च अस्य [8]भक्षः यथा न विदस्येत् [9]इति। इन्द्रप्रधाना इति एके। नैघण्टुकं [10]वायुकर्म। उभयप्रधाना [11]इति अपरम्। वरुणः (२) वृणोति इति सतः। तस्य एषा भवति (३)।

नीचीनवारं वरुणः [12]कवन्धं प्र ससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ( ऋ० सं० ५।८५।३ )॥ नीचीनद्वारं वरुणः कवन्धं मेघम्। कवनम् उदकं [13]भवति। [14]तत् अस्मिन् धीयते। उदकम् अपि [15]कवन्धम् ( निघ० १।१२।६ ) उच्यते। बन्धिः अनिभृतत्वे। कम् अनिभृतं च। प्रसृजति। द्यावापृथिव्यौ च अन्तरिक्षं च।

---

१ 'अलंकृताः' आ. २ 'आह्वानम्' इ. ३ 'अवक्षत्' अ. ४ 'रथस्य वोढारः' ई. ५ 'वोह्लारः' अ. ६ 'च' ई. ७ 'इति सतः' ई. ८ 'सोमभक्षः' इ. ९ 'इति' ई. १० 'वायुरभिधानम्' इ. ११ 'अपरे। वरु°' इ. १२ 'कवन्धं' अ. १३ 'भवति' ई. १४ 'कम्' अ, १५ 'कवन्वम्' अ। इ। ओ.

महत्त्वेन तेन [1]सर्वस्य भुवनस्य राजा यवम् इव वृष्टिः व्युनत्ति भूमिम्। तस्य एषा अपरा भवति (४)।

तमू षु समना गिरा पितॄणां च मन्मभिः। नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे (ऋ० सं० ८।४१।२)॥ तं सु अभिष्टौमि [2]समानया गिरा। गीत्या स्तुत्या। पितॄणां च मननीयैः स्तोमैः। नाभाकस्य प्रशस्तिभिः। [3]ऋषिः नाभाकः बभूव। यः स्यन्दमानानाम् [4]आसाम् अपाम् उपोदये। [5]सप्तस्वसारम् एनम् आह वाग्भिः। स मध्यमः इति निरुच्यते। [6]अथ एषः एव भवति। नभन्तामन्यके समे। मा भूवन् अन्यके सर्वे ये[7] नः द्विषन्ति दुर्धियः पापधियः। पापसंकल्पाः। रुद्रः (३) रौति इति सतः। रोरूयमाणः द्रवति इति वा। रोदयतेः। यदरुदत् तद्रुद्रस्य रुद्रत्वम् (काठकसं० २५।१) इति काठकम्। यदरोदीत् तद्रुद्रस्य रुद्रत्वम् इति हारिद्रविकम्। तस्य एषा भवति (५)।

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने। अषाह्[8]ळाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः (ऋ० सं० ७।४६।१)॥ इमाः रुद्राय [9]दृढधन्वने गिरः क्षिप्रेषवे देवाय अन्नवते अषाढाय [10]अन्यैः सहमानाय विधात्रे तिग्मायुधाय भरत। शृणोतु नः। [11]तिग्मं तेजतेः उत्साहकर्मणः। आयुधम् आयोधनात्। तस्य एषा अपरा भवति (६)।

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः। सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः (ऋ० सं० ७।४६।३)॥ या ते दिद्युत् अवसृष्टा दिवः परि दिवः अधि। दिद्युत् द्यतेः वा। [12]द्युतेः वा। क्ष्मया चरति। [13]क्ष्मा पृथिवी। [14]तस्यां चरति। तया चरति। विक्ष्मापयन्ती चरति इति वा। परिवृणक्तु नः सा। सहस्रं ते स्वाप्तवचन [15]भेष-

---

१ 'विश्वस्य' इ. २ 'समान्या' अ. ३ 'ऋषिः०बभूव' ई. ४ 'आसाम्' ई. ५ 'सप्तस्वसा संपद्यते वाग्भिः' इ. ६ 'अथ०भवति' ई. ७ 'ये०संकल्पाः' ई. ८ 'अपाह्ळाय' अ. ९ 'दृळ-धन्वने' अ. १० 'अन्यैः' ई. ११ 'तिग्मं० आयोधनात्' ई. १२ 'द्युतेर्वा। द्योततेर्वा' ओ. १३ 'क्ष्मा पृथिवी' ई. १४ 'क्ष्मया चरति। तस्यां वा चरति' इ. १५ 'भेषजानि' इ.

ज्यानि । मा नः त्वं पुत्रेषु च[1] पौत्रेषु च रीरिषः । तोकं ( निघ० २।२।२ ) तुद्यतेः । तनयं ( निघ० २।२।३ ) तनोतेः । अग्निः अपि रुद्रः उच्यते । तस्य एषा भवति (७) ।

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय । स्तोमं रुद्राय दृशीकम् ( ऋ० सं० १।२७।१० ) ॥ जरा स्तुतिः । जरतेः[2] स्तुतिकर्मणः । तां बोध । तया बोधयितर् इति वा । तत् विविड्ढि । तत् कुरु । मनुष्यस्य[3] मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयम् । इन्द्रः (४) इरां दृणाति इति वा । इरां ददाति इति वा । इरां दधाति इति वा । इरां दारयते इति वा । इरां धारयते इति वा । इन्दवे द्रवति[5] इति वा । इन्दौ रमते इति वा । इन्धे भूतानि इति वा । तद्यदेनं प्राणैः समैन्धत[6] तदिन्द्रस्येन्द्रत्वम् ( छा० उ० ५।१।१३ ) इति विज्ञायते । इदं करणात् इति आग्रायणः । इदं दर्शनात् इति औपमन्यवः । इन्दतेः वा ऐश्वर्यकर्मणः । इन्[7] । शत्रूणां दारयिता वा । द्रावयिता वा । आदरयिता च यज्वनाम् । तस्य एषा भवति (८) ।

अर्दर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः । महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ( ऋ० सं० ५।३२।१ ) ॥ अर्दणाः[8] उत्सम् । उत्सः उत्सदनात्[9] वा[10] । उत्स्यन्दनात् वा । उनत्तेः[11] वा । व्यसृजः अस्य खानि । त्वम् अर्णवान् अर्णस्वतः एतान् माध्यमिकान्[12] संस्त्यायान् बाबध्यमानान्[13] अरम्णाः । रम्णातिः संयमनकर्मा । विसर्जनकर्मा[14] वा । महान्तम् इन्द्र पर्वतं मेघं यत् व्यवृणोः व्यसृजः अस्य धाराः अवहन्[15] एनं दानवं दानकर्माणम् । तस्य एषा अपरा भवति (९) ।

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ( ऋ० सं०

---

१ 'च' आ. २ 'जरतेः स्तुतिकर्मणः' ई. ३ 'मनुष्याय यज्ञियाय' । स्तोमं° इ. ४ 'इर धारयते इति वा' ई. ५ 'द्रवते' अ. ६ 'समैन्धन्' ओ. ७ 'इन्' ई. ८ 'अर्दणाः' ई. ९ 'उत्सरणाद्वा । उत्सदनाद्वा' ओ. १० 'वा' ई. ११ 'उन्नयनाद्वा' अ. १२ 'माध्यमकान्' अ. १३ 'बाध्यमानान्' इ. १४ 'इह विसर्जनकर्मा । महा°' इ. १५ 'अवाहन्' अ.

२।१२।१ ) ॥ यः [1]जातः एव प्रथमः मनस्वी देवः देवान् क्रतुना कर्मणा पर्यभवत्[2] । पर्यगृह्णात् । पर्यरक्षत् । अत्यक्रामत् [3]इति वा । यस्य बलात् द्यावापृथिव्यौ [4]अपि अबिभीताम् नृम्णस्य मह्ना बलस्य महत्त्वेन । स जनासः इन्द्रः । [3]इति । ऋषेः दृष्टार्थस्य प्रीतिः भवति आख्यानसंयुक्ता । पर्जन्यः (५) तृपेः आद्यन्तविपरीतस्य । तर्पयिता जन्यः । परः । जेता वा । जनयिता वा । प्रार्जयिता वा रसानाम् । तस्य एषा भवति (१०) ।

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् । उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ( ऋ० सं० ५।८३।२ ) ॥ विहन्ति वृक्षान् । विहन्ति च रक्षांसि । सर्वाणि च अस्मात् भूतानि बिभ्यति महावधात् । महान् हि अस्य वधः । अपि अनपराधः भीतः पलायते वर्षकर्मवतः । यत् पर्जन्यः स्तनयन् हन्ति दुष्कृतः[6] पापकृतः । बृहस्पतिः (६) बृहतः पाता वा पालयिता वा । तस्य एषा भवति (११) ।

अश्नापिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम् । निष्टज्जभार चमसं न वृक्षाद्बृहस्पतिर्विरवेणा विकृत्य ( ऋ० सं० १०।६८।८ ) ॥ अशनवता मेघेन अपिनद्धं मधु पर्यपश्यत् । मत्स्यम् इव दीने उदके निवसन्तम् । निर्जहार तत् चमसम् इव वृक्षात् । चमसः कस्मात् । चमन्ति अस्मिन् इति । बृहस्पतिः विरवेण शब्देन विकृत्य । ब्रह्मणस्पतिः (७) ब्रह्मणः पाता वा पालयिता वा । तस्य एषा भवति (१२) ।

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् । तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम् ( ऋ० सं० २।२४।४ ) ॥ अशनवन्तम् आस्यन्दनवन्तम् अवातितं ब्रह्मणस्पतिः मधुधारम् [7]अभि यम् ओजसा बलेन अभ्यतृणत् तम् एव [8]सर्वे पिबन्ति रश्मयः

१ 'जायमानः' ओ. २ 'पर्यभूषत्' इ. ३ 'इति' ई. ४ 'अपि' ई. ५ 'महान् हि अस्य वधः' ई. ६ 'दुष्कृतः' ई. ७ 'अभि' ई. ८ 'सर्वे' ई.

सूर्यदृशः । बहु एनं सह सिञ्चन्ति उत्सम् । उद्रिणम् उदकवन्तम् ( महा० १२ ॥ गु० १२ । प्रथमः पादः ) ।

क्षेत्रस्य पतिः (८) । क्षेत्रं क्षियतेः निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्य एषा भवति ( महा० १४ ॥ गु० १ अथवा १४ ) ।

क्षेत्र॑स्य॒ पति॑ना व॒यं हि॒तेने॑व जयामसि । गामश्वं॑ पोषयि॒त्न्वा स नो॑ मृळाती[1]॒दृशे॑ ( ऋ० सं० ४।५७।१ ) ॥ क्षेत्रस्य पतिना वयं सुहितेन इव[2] जयामः[3] । गाम् अश्वं पुष्टं पोषयितृ च आहर । इति । स नो मृळाती॒दृशे । [4]बलेन वा धनेन वा । मृळतिः[5] दानकर्मा । तस्य एषा अपरा भवति ( महा० १५ ॥ गु० २ अथवा १५ ) ।

क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व । म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृळयन्तु (ऋ०सं० ४।५७।२ ) ॥ क्षेत्रस्य पते मधुमन्तम् ऊर्मिं धेनुः इव पयः अस्मासु धुक्ष्व । इति[8] । मधुश्चुतं घृतम् इव उदकं सुपूतम् ऋतस्य नः पातारः वा[9] पालयितारः वा मृळयन्तु[7] । मृळयतिः[10] उपदयाकर्मा[6][11] । पूजाकर्मा वा । तत् यत् समान्याम् ऋचि समानाभिव्याहारं भवति तत् जामि भवति इति एकम् । मधुमन्तं मधुश्चुतम् इति यथा । यत् एव समाने पादे समानाभिव्याहारं भवति तत् जामि भवति इति अपरम् । हिर॑ण्यरूपः॒ स हिर॑ण्यसंदृक् ( ऋ० सं० २।३५।१० ) इति यथा । यथाकथाच विशेषः अजामि भवति इति अपरम् । म॒ण्डूका॑ इवोद॒कान्म॒ण्डूका॑ उद॒कादि॑व ( ऋ० सं० १०।१६६।५ ) इति यथा । वास्तोष्पतिः (९) । वास्तु[12] वसतेः निवासकर्मणः । तस्य पाता वा पालयिता वा । तस्य एषा भवति ( महा० १६ ॥ गु० ३ अथवा १६ ) ।

अमी॒व॒हा वा॑स्तोष्पते॒ विश्वा॑ रू॒पाण्या॑वि॒शन् । सखा॑ सु॒शेव॑ एधि

---

१ 'मृळाती°' अ. २ 'इव' ई. ३ 'जयेम' इ. ४ 'बलेन° वा' ई. ५ 'मृळतिः' अ । 'मृडतिः' ओ. ६ 'उपदयाकर्मा पूजाकर्मा वा' अ. ७ 'मृळयन्तु' अ. ८ 'इति' ई ९ 'वा पालयितारो वा' ई. १० 'मृळतिर्दानकर्मा तद्यत्°' अ. ११ 'रक्षाकर्मा' इ. १२ 'वास्तुः' ओ.

नः ( ऋ० सं० ७।५५।१ ) ॥ [1]अभ्यमनहा वास्तोष्पते सर्वाणि रूपाणि आवि-
शन् सखा नः सुसुखः भव। [2]शेवः ( निघ० ३।६।१७ ) इति सुखनाम।
शिष्यतेः। वकारः नामकरणः अन्तस्थान्तरोपलिङ्गी विभाषितगुणः। शिवम्
( निघ० ३।६।१८ ) इति अपि अस्य भवति। यत् यत् रूपं कामयते तत्
तत् देवता भवति। रूपंरूपं मघवा बोभवीति ( ऋ० सं० ३।५३।८ )
इत्यपि निगमः भवति। वाचस्पतिः (१०) वाचः पाता वा पालयिता वा।
तस्य एषा भवति ( महा० १७ ॥ गु० ४ अथवा १७ )।

पुनरेहि वाचस्पते देवेन मनसा सह। वसोष्पते निरामय मय्येव
तन्वं१ मम ॥ [3]इति सा निगदव्याख्याता। [4]अपांनपात् (११) तनूनप्त्रा
व्याख्यातः ( निरु० ८।५ )। तस्य एषा भवति ( महा० १८ ॥ गु० ५ १
अथवा १८ )।

यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास [5]ईळते अध्वरेषु।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ( ऋ० सं०
१०।३०।४)॥ यः अनिध्मः [6]दीप्यते अभ्यन्तरम् अप्सु। यं मेधाविनः स्तुवन्ति
यज्ञेषु। सः अपां नपात् मधुमतीः अपः देहि अभिषवाय। याभिः इन्द्रः [7]वर्धते १
वीर्याय वीरकर्मणे। यमः (१२) यच्छति [8]इति सतः। तस्य एषा भवति
(महा० १९ ॥ गु० ६ अथवा १९ )।

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम्। वैव-
स्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य (ऋ० सं०१०।१४।१)॥
परेयिवांसं पर्यागतवन्तम्। प्रवतः उद्वतः निवतः इति अवतिः गतिकर्मा। २
बहुभ्यः [9]पन्थानम् अनुपस्पाशयमानम्। वैवस्वतं संगमनं जनानां यमं राजानं
हविषा दुवस्य। इति। दुवस्यतिः (निघ० ३।५।५) [10]राध्नोतिकर्मा। अग्निः

---

१ 'अभ्यमनहा' ई. २ 'शेवं' निघण्टौ. ३ 'इति° व्याख्याता' ई. ४ 'अपान्नपात्' अ। ओ. ५ 'ईलते' अ. ६ 'दीप्यसे' इ। 'दीदयत् दीप्यते' ओ. ७ 'वर्धेथाः' इ. ८ 'इति सतः' ई. ९ 'पन्था' अ. १० 'आप्नोतिकर्मा' अ.

अपि यमः उच्यते । तम् एताः ऋचः अनुप्रवदन्ति ( महा० २० ॥ गु० ७ अथवा २० ) ।

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका । यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम् । तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम् ( ऋ० सं० १।६६।७–९ ) ॥ इति द्विपदाः । सेना इव सृष्टा । भयं वा । बलं वा । दधाति[1] । अस्तुः इव दिद्युत् त्वेषप्रतीका । भय[2]प्रतीका । महाप्रतीका । दीप्तप्रतीका वा[3] । यमः ह जातः । [4]इन्द्रेण सह संगतः । यमाविहेह मातरा ( ऋ० सं० ६।५९।२ ) इत्यपि निगमः भवति । यमः इव[5] [6]जातः । [7]यमः [8]जनिष्यमाणः । जारः कनीनाम् । जरयिता कन्यानाम् । पतिः जनीनाम् । पालयिता जायानाम् । तत्प्रधानाः हि यज्ञसंयोगेन भवन्ति । तृतीयो अग्निष्टे पतिः ( ऋ० सं० १०।८५।४० ) इत्यपि निगमः भवति । तं वः चराथा । चरन्त्या पश्वाहुत्या । वसत्या च निवसन्त्या औषधाहुत्या । अस्तं यथा गावः आप्नुवन्ति तथा आप्नुयाम । इद्धं समिद्धं[9] भोगैः । मित्रः (१३) प्रमीतेः त्रायते । संमिन्वानः द्रवति इति वा । मेदयतेः वा । तस्य एषा भवति ( महा० २१ ॥ गु० ८अथवा २१ ) ।

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ( ऋ० सं० ३।५९।१ ) ॥ मित्रः जनान् आयातयति प्रब्रुवाणः । शब्दं कुर्वन् । मित्रः एव धारयति पृथिवीं च दिवं च । मित्रः कृष्टीः अनिमिषन् अभिविपश्यति । इति । कृष्टयः ( निघ० २।३।७ ) इति मनुष्यनाम । कर्मवन्तः भवन्ति । विकृष्टदेहाः वा । मित्राय हव्यं घृतवत् जुहोत इति व्या[10]ख्यातम् । जुहोतिः दानकर्मा । कः (१४) कमनः वा । क्रमणः वा । सुखः वा । तस्य एषा भवति ( महा० २२ ॥ गु० ९ अथवा २२ ) ।

---

१ 'ददाति' अ. २ 'महाप्रतीका । भयप्रतीका' इ । 'भयप्रतीका । बलप्रतीका । यशःप्रतीका । महाप्रतीका वा' ओ. ३ 'वा । अग्नेः अर्चिः । यमः' इ. ४ इन्द्रेण सह संगतः' ई. ५ 'इव' ई. ६ 'जातं' इ. ७ 'यमः' इ. ८ 'जनिष्यमाणं' इ. ९ 'समृद्धं' ओ. १० 'इति व्याख्यातम् । जुहोतिः दानकर्मा' ई.

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्[1] । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ( ऋ० सं० १०।१२१।१ ) ॥ हिरण्यगर्भः हिरण्यमयः गर्भः । हिरण्यमयः गर्भः अस्य इति वा । गर्भः गृभेः गृणात्यर्थे । गिरति अनर्थान् इति वा । यदा हि स्त्री गुणान् गृह्णाति गुणाः च अस्याः गृह्यन्ते अथ गर्भः भवति । समभवत् अग्रे । भूतस्य जातः पतिः एकः बभूव । स धारयति पृथिवीं च दिवं च । कस्मै देवाय हविषा विधेम इति[2] व्याख्यातम् । विधतिः दानकर्मा । सरस्वान् (१५) व्याख्यातः ( निरु० ९।२६ ) । तस्य एषा भवति ( महा० २३ ॥ गु० १० अथवा २३ ) ।

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव[1] ( ऋ० सं० ७।९६।५ ) ॥ इति[3] सा निगदव्याख्याता ( महा० २४ ॥ गु० ११ अथवा २४ द्वितीयः पादः ) ।

विश्वकर्मा (१६) सर्वस्य कर्ता । तस्य एषा भवति ( महा० २५ ॥ गु० १ अथवा २५ ) ।

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक् । [1] तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन् पर एकमाहुः ( ऋ० सं० १०।८२।२ ) ॥ विश्वकर्मा विभूतमनाः व्याप्ता धाता च विधाता च परमः च संद्रष्टा भूतानाम् । तेषाम् इष्टानि वा[4] । कान्तानि वा । क्रान्तानि[5] वा । गतानि वा । मतानि वा । नतानि वा । अद्भिः सह संमोदन्ते । यत्र एतानि सप्त[6] ऋषीणानि ज्योतींषि । तेभ्यः[7] परः आदित्यः । तानि एतस्मिन् एकं भवन्ति[8] । २ इति अधिदैवतम् । अथ अध्यात्मम् । विश्वकर्मा विभूतमनाः व्याप्ता[9] धाता च विधाता च परमः च संदर्शयिता इन्द्रियाणाम् । एषाम् इष्टानि वा । कान्तानि वा । क्रान्तानि वा । गतानि वा । मतानि वा । नतानि वा । अन्नेन सह संमोदन्ते । यत्र इमानि सप्त ऋषीणानि इन्द्रियाणि । एभ्यः[10] परः

१ 'आसीत्' इ. २ 'इति व्याख्यातम्' ई. ३ 'इति° व्याख्याता' ई. ४ 'वा' ई. ५ 'क्रान्तानि वा । गतानि वा' ई. ६ 'सप्तर्पणानि' अ. ७ 'तेभ्यः° एतस्मिन्' ई । 'एतेभ्यः'- एकस्मिन् गुर्जरपुस्तके. ८ 'भवन्ति । यत्र पर एकमाहुः' इ. ९ 'महान्' इ. १० एभ्यः° अस्मिन्' ई.

आत्मा । तानि अस्मिन्[1] एकं भवन्ति[2] । इति आत्मगतिम् आचष्टे । तत्र इतिहासम् आचक्षते । विश्वकर्मा[3] भौवनः सर्वमेधे सर्वाणि भूतानि जुहवांचकार । सः आत्मानम् अपि अन्ततः जुहवांचकार । तदभिवादिनी एषा ऋक् भवति । य इमा विश्वा भुवनानि जुह्वत् ( ऋ० सं० १०।८१।१ ) इति । तस्य उत्तरा भूयसे निर्वचनाय (महा० २६ ॥ गु० २ अथवा २६ ) ।

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ( ऋ० सं० १०।८१।६ ) ॥ विश्वकर्मन् हविषा वर्धयमानः[4] स्वयं यजस्व पृथिवीं च दिवं च । मुह्यन्तु अन्ये अभितः जनाः[5] सपत्नाः । इह अस्माकं मघवा सूरिः अस्तु । प्रज्ञाता । ताक्ष्र्यः (१७) त्वष्ट्रा व्याख्यातः ( निरु० ८।१३ ) । तीर्णे अन्तरिक्षे क्षियति । तूर्णम् अर्थं रक्षति । अश्नोतेः वा । तस्य एषा भवति ( महा० २७ ॥ गु० ३ अथवा २७ ) ।

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्र्यमिहा हुवेम (ऋ० सं० १०।१७८।१)॥ तं भृशम्[6] अन्नवन्तम् । जूतिः गतिः । प्रीतिः वा । देवजूतं देवगतम् । देवप्रीतं वा । सहस्वन्तं तारयितारं रथानाम् अरिष्टनेमिं पृतनाजितम् आशुं स्वस्तये ताक्ष्र्यम् इह ह्वयेम[7] । इति[8] । कम्[9] अन्यं मध्यमात् एवम् अवक्ष्यत्[10] । तस्य एषा अपरा भवति ( महा० २८ ॥ गु० ४ अथवा २८ ) ।

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ( ऋ० सं० १०।१७८।३ ) ॥ सद्यः अपि यः शवसा[11] बलेन तनोति अपः सूर्यः इव ज्योतिषा पञ्च मनुष्यजातानि[12] । सहस्रसानिनी[13] शतसानिनी अस्य सा[14] गतिः ।

१ 'एतस्मिन्' ओ. २ 'भवन्ति । यत्र पर एकमाहुः' इ. ३ 'विश्वकर्मा ह भौवनः' इ ४ 'वर्धमानः' इ. ५ 'जनासः' अ. ६ 'भृशम्० प्रीतिः वा' ई. ७ 'आह्वयामहे' इ. ८ 'इति ई. ९ 'कम्° अवक्ष्यत्' ई. १० 'अवक्षत्' अ. ११ 'शवसा' ई. १२ 'मनुष्यजातानि प्रति' इ. १३ 'सहस्रसानिनी शतसानिनी' ई. १४ 'सा' ई.

न स्म[1] एनां[2] वारयन्ति प्रयुवतीम्[3] इव शरमयीम् इषुम् । मन्युः (१८) मन्यतेः दीप्तिकर्मणः[4] । क्रोधकर्मणः वा[5] । मन्युन्ति[6] अस्मात् इषवः । तस्य एषा भवति ( महा० २९ ॥ गु० ५ अथवा २९ ) ।

त्वया मन्यो सरथमारुजन्तो हर्षमाणासोऽधृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो[7] अग्निरूपाः ( ऋ० सं० १०।८४।१ ) ॥ त्वया मन्यो सरथम् आरुह्य रुजन्तः हर्षमाणासः अधृषिताः मरुत्वः तिग्मेषवः आयुधानि संशिश्यमानाः अभिप्रयन्तु नरः अग्निरूपाः अग्निकर्माणः । संनद्धाः[8] कवचिनः इति वा । दधिक्राः (१९) व्याख्यातः ( निरु० २।२७ ) । तस्य एषा भवति (महा० ३० ॥ गु० ६ अथवा ३०)।

आ दधिक्राः शवसा[9] पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान । सहस्रसा शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ( ऋ० सं० ४।३८।१० ) ॥ आतनोति दधिक्राः शवसा बलेन अपः सूर्यः इव ज्योतिषा पञ्च मनुष्यजातानि[10] । सहस्रसाः शतसाः वाजी वेजनवान् अर्वा ईरणवान् संपृणक्तु नः मधुना उदकेन वचनानि[11] इमानि । इति[12] । मधु धमतेः विपरीतस्य । सविता (२०) सर्वस्य[13] प्रसविता । तस्य एषा भवति ( महा० ३१ ॥ गु० ७ अथवा ३१ ) ।

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ( ऋ० सं० १०।१४९।१ ) ॥ सविता यन्त्रैः पृथिवीम् अरमयत्[14] । अनारम्भणे[15] अन्तरिक्षे सविता द्याम् अदृंहत् । अश्वम् इव अधुक्षत् धुनिम् अन्तरिक्षे मेघम् । बद्धम् अतूर्ते । बद्धम् अतूर्णे[16] इति वा । अत्वरमाणे इति वा । सविता समुदितारम् । इति[12] । कम् अन्यं मध्यमात्[17] एवम् अवक्ष्यत्[18] । आदित्यः अपि सविता उच्यते ।

---

१ 'स्म' ई. २ 'एतां' इ. ३ 'प्रयुवतम्' ई. ४ 'क्रोधकर्मणः । दीप्तिकर्मणः वा' इ. ५ '°कर्मणो वधकर्मणोवा' ओ. ६ 'मन्यु° इषवः' ई । 'मन्यन्त्यस्मात्' ओ. ७ 'नराः' इ. ८ 'संनद्धाः° वा' ई. ९ 'शवसा' आ. १० 'मनुष्यजातानि प्रति' इ. ११ 'वचांसि' इ. १२ 'इति' ई. १३ 'व्याख्यातः । तस्य°' ई. १४ 'अरम्णात्' इ. १५ 'अनालम्भने' अथवा 'अनालम्बने' अ. १६ 'अतूर्णे इति वा' ई. १७ 'आदित्यात्' अ. १८ 'अवक्षत्' अ.

तथा च हैरण्यस्तूपे स्तुतः[1]। अर्चन् हिरण्यस्तूपः ऋषिः इदं सूक्तं प्रोवाच। तदभिवादिनी एषा ऋक् भवति ( महा० ३२ ॥ गु० ८ अथवा ३२ )।

हिर॑ण्यस्तूपः सवितर्यथा॑ त्वाङ्गि॒र॒सो जु॒ह्वे वाजे॑ अ॒स्मिन्। ए॒वा त्वार्च॒न्नव॑से॒ वन्द॑मानः॒ सोम॑स्येवां॒शुं प्रति॑ जागरा॒हम् (ऋ० सं० १०।१४९।५)॥ हिरण्यस्तूपः हिरण्मयः[2] स्तूपः। हिरण्मयः स्तूपः अस्य इति वा। स्तूपः स्त्यायतेः। संघातः। सवितर् यथा त्वा[3] आङ्गिरसः[4] जुह्वे वाजे अन्ने अस्मिन् एवं त्वां अर्चन् अवनाय वन्दमानः सोमस्य इव अंशुं प्रति जागर्मि अहम्। त्वष्टा (२१) व्याख्यातः (निरु० ८।१३)। तस्य एषा भवति ( महा० ३३ ॥ गु० ९ अथवा ३३ )।

दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान। इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् (ऋ० सं० ३।५५।१९)॥ देवः त्वष्टा सविता सर्वरूपः पोषति[5] प्रजाः रसानुप्रदानेन। बहुधा च इमाः[6] जनयति। इमानि च[7] सर्वाणि भूतानि[8] उदकानि अस्य। महत् च अस्मै[9] देवनाम् असुरत्वम् एकम्[10]। प्रज्ञावत्त्वं वा[11]। अनवत्त्वं[12] वा। अपि[13] वा। असुः ( निघ० ३।९।६ ) इति प्रज्ञानाम। अस्यति अनर्थान्। अस्ताः च अस्याम् अर्थाः[14]। असुरत्वम्[15] आदिलुप्तम्। वातः (२२) वाति इति सतः। तस्य एषा भवति ( महा० ३४ ॥ गु० १० अथवा ३४ )।

वात॒ आ वा॑तु भेष॒जं श॒म्भु म॑यो॒भु नो॑ हृ॒दे। प्र ण॒ आयूं॑षि तारिषत् (ऋ० सं० १०।१८६।१)॥ वातः आवातु भैषज्यानि[16] शंभु मयोभु च नः हृदयाय। प्रवर्धय[17] च नः आयुः[18]। अग्निः (२३) व्याख्यातः (निरु० ७।१४)। तस्य एषा भवति ( महा० ३५ ॥ गु० ११ अथवा ३५ )।

प्रति॒ त्यं चारु॑मध्व॒रं गो॑पी॒थाय॒ प्र हू॑यसे। म॒रुद्भि॑रग्न॒ आ ग॑हि

१ 'स्तवः' इ. २ 'हिरण्मयः॰ इति वा' ई. ३ 'त्वां' इ. ४ 'आङ्गिरसः जुह्वे' ई. ५ 'पुष्णाति' इ. ६ 'इमां' अ। 'एनाः' इ. ७ 'च सर्वाणि' ई. ८ 'भुवनानि' इ. ९ 'अस्मै' ई. १० 'एकत्वं' अ. ११ 'वा' ई. १२ 'अन्नवत्वम् इति केचित्' इ. १३ 'अपि वा' ई. १४ 'अनर्थाः' अ. १५ 'वसुरत्वम् आदिलुप्तं वा। वातः॰' इ. १६ 'भेषजं' इ. १७ 'प्रवर्धयतु' ओ. १८ 'आयूंषि' इ.

(ऋ० सं० १।१९।१ )॥ तं प्रति चारुम्[1] अध्वरं सोमपानाय प्रहूयसे । सः अग्ने मरुद्भिः सह आगच्छ । इति[2] । कम् अन्यं मध्यमात् एवम् अवक्ष्यत्[3] । तस्य एषा अपरा भवति ( महा० ३६ ॥ गु० १२ अथवा ३६ )।

अभि त्वा॑ पू॒र्वपी॑तये सृ॒जामि॑ सो॒म्यं मधु॑ । म॒रुद्भि॑रग्न॒ आ ग॑हि (ऋ० सं० १।१९।९) ॥ अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु । सोममयम् । सः अग्ने मरुद्भिः सह आगच्छ । इति ( महा० ३७ ॥ गु० १३ अथवा ३७ तृतीयः पादः ) ।

वेनः (२४) वेनतेः कान्तिकर्मणः । तस्य एषा भवति ( महा० ३८ ॥ गु० १ अथवा ३८ ) ।

अ॒यं वे॒नश्चो॑दय॒त्पृश्नि॑गर्भा॒ ज्योति॑र्जरायू॒ रज॑सो वि॒माने॑ । इ॒मम॒पां सं॑ग॒मे सूर्य॑स्य॒ शिशुं॒ न विप्रा॑ म॒तिभी॑ रिहन्ति (ऋ० सं० १०।१२३।१)॥ अयं वेनः चोदयत्[4] पृश्निगर्भाः । प्राष्टवर्णगर्भाः आपः इति वा[5] । ज्योतिः जरायुः । ज्योतिः अस्य जरायुस्थानीयं भवति । जरायुः जरया गर्भस्य । जरया यूयते इति वा । इमम् अपां च संगमने[6] सूर्यस्य च शिशुम् इव विप्राः मतिभिः रिहन्ति । रिहन्ति लिहन्ति । वर्धयन्ति[7] । पूजयन्ति इति वा । शिशुः शंसनीयः भवति । शिशीतेः वा स्यात् दानकर्मणः । चिरलब्धः[8] गर्भः इति[9] । असुनीतिः (२५) असून् नयति । तस्य एषा भवति ( महा० ३९ ॥ गु० २ अथवा ३९ ) ।

असु॑नीते॒ मनो॑ अ॒स्मासु॑ धारय जी॒वात॑वे॒ सु प्र ति॑रा न॒ आयुः॑ । रा॒र॒न्धि नः॒ सूर्य॑स्य सं॒दृशि॑ घृ॒तेन॒ त्वं त॒न्वं॑ वर्धयस्व ( ऋ० सं० १०।५९।५) ॥ असुनीते मनः अस्मासु धारय । चिरं जीवनाय प्रवर्धय च नः आयुः । रन्धय च[10] नः सूर्यस्य संदर्शनाय[11] । रध्यतिः वशगमने अपि दृश्यते । मा र॑धाम द्विष॒ते सो॑म राजन् (ऋ० सं० १०।१२८।५) ॥ इत्यपि निगमः

१ 'चारुम्' ई. २ 'इति' ई. ३ 'अवक्षत्' अ. ४ 'चोदयति' इ. ५ 'इति वा' ई. ६ 'संगमे' इ. ७ 'स्तुवन्ति वर्ध०' ओ. ८ 'अचिरलब्धः' अथवा 'अचिराल्लब्धः' इ. ९ 'भवति' ओ. १० 'च' ई. ११ 'संमाश्रय' इ.

भवति । घृतेन त्वम् आत्मानं तन्वं[1] वर्धयस्व । ऋतः (२६) व्याख्यातः ( निरु० २।२५ ) । तस्य एषा भवति ( महा० ४० ॥ गु० ३ अथवा ४० ) ।

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति । ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ( ऋ० सं० ४।२३।८ ) ॥ ऋतस्य हि[2] शुरुधः सन्ति पूर्वीः । ऋतस्य प्रज्ञा वर्जनीयानि[3] हन्ति । ऋतस्य श्लोकः बधिरस्य अपि कर्णौ आतृणत्ति । बधिरः बद्धश्रोत्रः । कर्णौ[4] बोधयन्[5] दीप्यमानः आयोः[6] अयनस्य मनुष्यस्य । ज्योतिषः वा[7] । उदकस्य वा । इन्दुः (२७) इन्धेः । उनत्तेः वा । तस्य एषा भवति ( महा० ४१ ॥ गु० ४ अथवा ४१ ) ।

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ( ऋ० सं० १।१२९।६ ) ॥ प्रब्रवीमि तत् भव्याय इन्दवे । हवनार्हः इव यः इषवान् । अन्नवान् । कामवान् वा । मननानि च नः रेजयति । रक्षोहा च बलेन रेजयति । स्वयं सः अस्मदभिनिन्दितारम् । वधैः अजेत दुर्मतिम् । अवस्रवेत् अघशंसः । ततः अवतरं क्षुद्रम् इव अवस्रवेत् । अभ्यासे भूयांसम् अर्थं मन्यन्ते । यथा । अहो दर्शनीय अहो दर्शनीय । इति । तत् परुच्छेपस्य शीलम् । परुच्छेपः ऋषिः । पर्ववत्[8] शेपः । परुषि परुषि शेपः अस्य इति वा । इति इमानि सप्तविंशतिः देवतानामधेयानि अनुक्रान्तानि । सूक्तभाञ्जि हविर्भाञ्जि । तेषाम् एतानि अहविर्भाञ्जि । वेनः असुनीतिः ऋतः इन्दुः । प्रजापतिः ( २८ ) प्रजानां पाता वा पालयिता वा । तस्य एषा भवति ( महा० ४२ ॥ गु० ५ अथवा ४२ ) ।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ( ऋ० सं० १०।१२१।१० ) ॥ प्रजापते न हि[2] त्वत् एतानि अन्यः सर्वाणि जातानि[9]

१ 'तन्वं' ई. २ 'हि' ई. ३ वर्धनीयानि' द्वयोः गुर्जरपुस्तकयोः. ४ 'कर्णौ' ई. ५ 'बोधयति' इ. ६ 'आयोः' आ. ७ 'च' इ. ८ 'पर्ववत् शेपः' आ. ९ 'रूपाणि' इ.

तानि[1] परिबभूव । यत्कामाः ते जुहुमः तत् नः अस्तु । वयं स्याम पतयः रयीणाम् । इति आशीः । अहिः ( २९ ) व्याख्यातः ( निरु० २।१७ )। तस्य एषा भवति ( महा० ४३ ॥ गु० ६ अथवा ४३ )।

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ( ऋ० सं० ७।३४।१६ )। अप्सुजेम्[2] उक्थैः अहिं गृणीषे बुध्ने नदीनां रजःसु उदकेषु[3] सीदन्[4] । बुध्नम् अन्तरिक्षम् । बद्धाः[5] अस्मिन् धृताः आपः[6] । इदम् अपि इतरत् बुध्नम् एतस्मात् एव । बद्धाः अस्मिन् धृताः प्राणाः इति । यः अहिः स बुध्न्यः । बुध्नम् अन्तरिक्षम् । तन्निवासात् । तस्य एषा भवति ( महा० ४४ ॥ गु० ७ अथवा ४४ )।

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ( ऋ० सं० १
७।३४।१७ )। मा च[7] नः अहिर्बुध्न्यः रेषणाय धात् । मा अस्य यज्ञो[8] वा च स्रिधत् यज्ञकामस्य । सुपर्णः ( ३१ ) व्याख्यातः ( निरु० ३।१२ ॥ ४।३ ॥ ७।२४ )। तस्य एषा भवति ( महा० ४५ ॥ गु० ८ अथवा ४५ )।

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं १
पाकेन मनसापश्यमन्तितस्तं माता रेह्लि स उ रेह्लि मातरम् ( ऋ० सं० १०।११४।४ ) ॥ एकः सुपर्णः । सः समुद्रम् आविशति । स इमानि सर्वाणि भूतानि अभिविपश्यति । तं पाकेन मनसा अपश्यम् अन्तितः[10] । इति ऋषेः दृष्टार्थस्य प्रीतिः भवति आख्यानसंयुक्ता । तं माता रेह्लि[9] । वाक् एषा[11] माध्य-
मिका । स उ मातरं रेह्लि । पुरूरवाः ( ३२ ) बहुधा रोरूयते । तस्य एषा २
भवति ( महा० ४६॥ गु० ९ अथवा ४६ )।

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्य[12]ः स्वगूर्ताः । महे यत्त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः ( ऋ० सं० १०।९५।७ )॥

---

१ 'परि तानि बभूव' अ. २ 'अप्सुजाम्' अ. ३ 'उदकेपु' आ. ४ 'पीदन्' अ. ५ 'वुद्धाः' अ. ६ 'आपः इति' इ । 'आपः इति वा' ओ. ७ 'च' ई. ८ 'यज्ञः' इ. ९ 'रेह्लि' अ । 'रेढि' केपुचित् महाराष्ट्रपुस्तकेपु. १० 'अन्तिकम्' इ. ११ 'एषा' ई. १२ 'स्वगूर्ताः' आ.

समासत अस्मिन् जायमाने ग्नाः । गमनात् आपः । देवपत्न्यः वा । अपि च । एनम् अवर्धयन् नद्यः । स्वगूर्ताः स्वयंगामिन्यः । महते च यत् त्वा पुरूरवः रणाय रमणीयाय संग्रामाय अवर्धयन् । दस्युहत्याय च । देवाः देवाः ( महा० ४७ ॥ गु० १० अथवा ४७ चतुर्थः पादः ) ।

दशमोऽध्यायः समाप्तः ।

---

# एकादशोऽध्यायः

श्येनः ( निघ० ५।५।१ ) व्याख्यातः ( निरु० ४।२४ )। तस्य एषा भवति ( १ )।

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम्। अत्रा पुरन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः ( ऋ० सं० ४।२६।७ ) ॥ आदाय श्येनः अहरत्[1]। सोमम्। सहस्रं सवान् अयुतं च सह[2]। सहस्रं[3] सहस्रसाव्यम् अभिप्रेत्य। तत्र अयुतं सोमभक्षाः। तत्संबन्धेन अयुतं दक्षिणाः इति वा। तत्र[4] पुरन्धिः अजहात् अमित्रान्। अदानान् इति वा। मदे सोमस्य मूरा अमूरः। इति[5]। ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः। तस्मात् इन्द्रं मन्यन्ते। ओषधिः सोमः ( २ ) सुनोतेः। यत् एनम् अभिषुण्वन्ति। बहुलम् अस्य नैघण्टुकं वृत्तम्। आश्चर्यम् इव प्राधान्येन। तस्य पावमानीषु निदर्शनाय उदाहरिष्यामः ( २ )।

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः ( ऋ० सं० ९।१।१ ) ॥ इति[6] सा निगदव्याख्याता। अथ एषा अपरा भवति चन्द्रमसः वा। एतस्य वा ( ३ )।

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम्। सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ( ऋ० सं० १०।८५।३ ) ॥ सोमं मन्यते पपिवान् यत् संपिंषन्ति ओषधिम्। इति वृथासुतम् असोमम् आह। सोमं यं ब्रह्माणः विदुः। इति। न तस्य अश्नाति कश्चन अयज्वा। इति आधियज्ञम्। अथ अधिदैवतम्। सोमं मन्यते पपिवान् यत् संपिंषन्ति ओषधिम्। इति यजुःसुतम् असोमम् आह। सोमं यं ब्रह्माणः विदुः चन्द्रमसं न तस्य अश्नाति कश्चन अदेवः। इति। अथ एषा अपरा भवति चन्द्रमसः वा। एतस्य वा ( ४ )।

---

१ 'अपिबत्' इ. २ 'सह' ई. ३ 'सहस्रं' ई. ४ 'अत्र' इ. ५ 'इति०मन्यन्ते' ई. ६ 'इति०व्याख्याता' ई.

यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः ( ऋ० सं० १०।८५।५ ) ॥ यत् त्वा देव. प्रपिबन्ति ततः आप्यायसे पुनः । [1]इति नाराशंसान् अभिप्रेत्य । पूर्वपक्षापरपक्षौ इति वा । वायुः सोमस्य रक्षिता । वायुम् अस्य रक्षितारम् आह । साहचर्यात् । रसहरणात् वा । समानां संवत्सराणां मासः आकृतिः सोमः रूपविशेषैः ओषधिः । चन्द्रमाः वा । चन्द्रमाः ( ३ ) चायन् द्रमति । चन्द्रः माता । चान्द्रं मानम् अस्य इति वा । चन्द्रः चन्दतेः कान्तिकर्मणः । चन्दनम् इत्यपि अस्य भवति । चारु द्रमति । चिरं द्रमति । चमेः वा पूर्वम् । चारु रुचेः विपरीतस्य । तस्य एषा भवति ( ५ ) ।

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ( ऋ० सं० १०।८५।१९ )॥ नवः नवः भवति जायमानः । इति पूर्वपक्षादिम् अभिप्रेत्य । अह्नां केतुः उषसाम् एति अग्रम् । इति अपरपक्षान्तम् अभिप्रेत्य । आदित्यदैवतः द्वितीयः पादः इति एके । भागं देवेभ्यः विदधाति आयन् । [2]इति अर्धमासेज्याम् अभिप्रेत्य । प्रवर्धयते चन्द्रमाः दीर्घम् आयुः । मृत्युः ( ४ ) मारयति इति सतः । मृतं च्यावयति इति वा शतबलाक्षः मौद्गल्यः । तस्य एषा भवति ( ६ ) ।

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ( ऋ० सं० १०।१८।१ ) ॥ [3]परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो । कथितं तेन मृत्यो । मृतं च्यावयते । भवति मृत्यो । मदेः वा । मुदेः वा । तेषाम् एषा भवति (७) ।

[4]त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति । या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ( ऋ० सं० १।१५५।२ ) ॥ इति सा निगदव्याख्याता । विश्वानरः ( ५ ) व्याख्यातः ( निरु० ७।२१ ) । तस्य एषा भवति ( ८ )

१ 'इति नाराशंसान् अभिप्रेत्य' ई. २ 'इति अर्धमासेज्याम् अभिप्रेत्य' ई. ३ 'परं० तेषामेषा भवति' ई. ४ 'त्वेष० व्याख्याता' ई.

प्र वो॑ म॒हे मन्द॑माना॒यान्ध॒सोऽर्चा॑ वि॒श्वान॑राय विश्वा॒भुवे॑ । इन्द्र॑स्य॒ यस्य॒ सुम॑खं॒ सहो॒ महि॒ श्रवो॑ नृ॒म्णं च॒ रोद॑सी सप॒र्यतः॑ ( ऋ० सं० १०।५०।१ ) ॥ प्रार्चत स्तुतिं[1] महते । अन्धसः अन्नस्य दात्रे । मन्दमानाय मोदमानाय[2] । स्तूयमानाय[3] । शब्दार्य्यमानाय[4] इति[5] वा । विश्वानराय सर्व[6] विभूताय । इन्द्रस्य यस्य प्रीतौ[7] सुमहत् बलं महत् च श्रवणीयं यशः नृम्णं च बलम् । नृन् नतम् । द्यावापृथिव्यौ वः परिचरतः । इति । कम् अन्यं मध्यमात् एवम् अवक्ष्यत्[8] । तस्य एषा अपरा भवति ( ९ ) ।

उदु॒ ज्योति॑र॒मृतं॑ वि॒श्वज॑न्यं वि॒श्वान॑रः सवि॒ता दे॒वो अ॑श्रेत् ( ऋ० सं० ७।७६।१ ) । उदशिश्रियत्[9] ज्योतिः अमृतं सर्वजन्यं विश्वानरः सविता[10] देवः । इति । धाता ( ६ ) सर्वस्य विधाता । तस्य एषा भवति ( १० ) ।

धा॒ता द॑दातु दा॒शुषे॒ प्राचीं॑ जी॒वातु॒मक्षि॑तां[11] । व॒यं दे॒वस्य॑ धीमहि सु॒म॒तिं स॒त्यध॑र्मणः ( मैत्रा० सं० ४।१२।६ ॥ अथ० सं० ७।१७।२ ) ॥ धाता ददातु[12] दत्तवते[13] प्रवृद्धां जीविकाम् अनुपक्षीणाम्[14] । वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः । विधाता ( ७ ) धात्रा व्याख्यातः ( निरु० ११।१० ) । तस्य एषा निपातः भवति बहुदेवतायाम् ऋचि ( ११ ) ।

सोम॑स्य॒ राज्ञो॒ वरु॑णस्य॒ धर्म॑णि॒ बृह॒स्पते॒रनु॑मत्या उ॒ शर्म॑णि । तवा॒हम॒द्य म॑घव॒न्नुप॑स्तुतौ॒ धात॒र्विधा॑तः क॒लशाँ॑ अभक्षयम् ( ऋ० सं० १०।१६७।३ ) ॥[15] इति एताभिः देवताभिः अभिप्रसूतः सोमकलशान् अभक्षयम् । इति । कलशः कस्मात्[16] । कलाः अस्मिन् शेरते । मात्राः । कलिः च कलाः च किरतेः । विकीर्णाः मात्राः ( १२ गु० प्रथमः पादः ) ।

---

१ 'प्रार्चत स्तुतिं' ओ. २ 'ह्णय्यमाणाय' इ. ३ 'स्तूयमानाय' ई. ४ 'शब्दायमानाय' अ. ५ 'इति' ई. ६ 'सर्वं विभूताय' ई. ७ 'प्रीतौ' ई. ८ 'अवक्षत्' अ. ९ 'उदशिश्रियत्' ओ, 'उच्छ्रयति' इ. १० 'सविता देवः इति' ई. ११ '°मक्षितिम्' अ. १२ 'ददाति' इ. १३ 'दाशुषे' इ. १४ 'अक्षीणाम्' इ. १५ 'इति एताभिः देवताभिः' ई. १६ 'कस्मात्' आ.

अथ अतः मध्यस्थानाः देवगणाः । तेषां मरुतः (८) प्रथमागामिनः भवन्ति । मरुतः मितराविणः वा । मितरोचिनः वा । महत् [1]रवन्ति इति वा । तेषाम् एषा भवति ( महा० १३ ॥ गु० १ अथवा १३ ) ।

आ वि॒द्युन्म॑द्भिर्मरुतः स्व॒र्कै रथे॑भिर्यात ऋष्टि॒मद्भि॒रश्व॑पर्णैः । आ वर्षि॑ष्ठया न इ॒षा वयो॑ न प॑प्तता सुमायाः ( ऋ० सं० १।८८।१ ) ॥ विद्युन्मद्भिः मरुतः स्वर्कैः । स्वञ्चनैः इति वा । स्वर्चनैः इति वा । [2]स्वर्चिभिः इति वा । रथैः आयात । ऋष्टिमद्भिः । अश्वपर्णैः [3]अश्वपतनैः । [4]वर्षिष्ठेन च नः अन्नेन वयः इव आपतत । सुमायाः [5]कल्याणकर्माणः वा । [6]कल्याणप्रज्ञाः वा । रुद्राः ( ९ ) व्याख्याताः ( निरु० १०।५ ) । तेषाम् एषा भवति ( महा० १४ ॥ गु० २ अथवा १४ ) ।

आ रु॒द्रास॒ इन्द्र॑वन्तः स॒जोष॑सो॒ हिर॑ण्यरथाः सुवि॒ताय॑ गन्तन । इ॒यं वो॑ अ॒स्मत्प्रति॑ हर्यते म॒तिस्तृ॒ष्णजे॒ न दि॒व उत्सा॑ उद॒न्यवे॑ ( ऋ० सं० ५।५७।१ ) ॥ आगच्छत रुद्राः इन्द्रेण [7]सहजोषणाः सुविताय कर्मणे । इयं वः अस्मत् [8]अपि प्रतिकामयते मतिः । तृष्णजे इव दिवः उत्साः उदन्यवे । [9]इति । तृष्णक् तृष्यतेः । उदन्युः उदन्यतेः । ऋभवः ( १० ) उरु भान्ति इति वा । ऋतेन भान्ति इति वा । ऋतेन भवन्ति इति वा । तेषाम् एषा भवति ( महा० १५ ॥ गु० ३ अथवा १५ ) ।

वि॒ष्ट्वी शमी॑ तरणि॒त्वेन॑ वा॒घतो॒ मर्ता॑सः॒ सन्तो॑ अमृत॒त्वमा॑नशुः । सौध॒न्व॒ना ऋ॒भव॒ः सूर॑चक्षसः संवत्स॒रे सम॑पृच्यन्त धी॒तिभि॑ः ( ऋ० सं० १।११०।४ ) ॥ कृत्वा कर्माणि क्षिप्रत्वेन [10]वोढारः । मेधाविनः वा । [11]मर्तासः सन्तः अमृतत्वम् आनशिरे सौधन्वनाः ऋभवः । सूरख्यानाः [12]वा । सूरप्रज्ञाः वा । संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः । ऋभुः विभ्वा वाजः इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः । तेषां प्रथमोत्तमाभ्यां बहुवत् निगमाः भवन्ति । न मध्यमेन । तत् एतत् ऋभोः च बहुवचनेन चमसस्य

---

१ 'द्रवन्ति' ओ. । सायणः अपि तथैव । 'महद्रुवन्ति' इति द्वयोः गुर्जरवृत्तिपुस्तकयोः २ 'स्वर्चिभिः इ । अ. ३ 'अशनपतनैः' इ. ४ 'वर्षिष्ठेन च नः' ई. ५ 'सुकर्माणः' इ. ६ 'सुप्रज्ञाः' ई. ७ 'सहजोषणाः' ई. ८ 'अपि' ई. ९ 'इति०उदन्यतेः' ई । 'इति' आ. १० 'वोढारः' आ. ११ 'मर्ताः' इ. १२ 'वा' ई.

च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति । आदित्यरश्मयः अपि ऋभवः उच्यन्ते । अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ (ऋ० सं० १।१६१।११ ) । अगोह्यः आदित्यः । अगूहनीयः । तस्य[1] यत् अस्वपथ[2] गृहे । यावत् तत्र भवथ न तावत् इह भवथ । इति । अङ्गिरसः ( ११ ) व्याख्याताः ( निरु० ३।१७ ) । तेषाम् एषा भवति ( महा० १६ ॥ गु० ४ अथवा १६ ) ।

विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ( ऋ० सं० १०।६२।५) ॥ बहुरूपाः[3] ऋषयः ते[4] गम्भीरकर्माणः वा[5] गम्भीरप्रज्ञाः वा । ते अङ्गिरसः पुत्राः । ते अग्नेः अधिजज्ञिरे । इति अग्निजन्म । पितरः (१२) व्याख्याताः (निरु० ४।२१) । तेषाम् एषा भवति ( महा० १७ ॥ गु० ५ अथवा १७ ) ।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ( ऋ० सं० १०।१५।१ ) ॥ उदीरताम् अवरे । उदीरताम् परे । उदीरतां मध्यमाः पितरः सोम्याः[6] । सोमसंपादिनः ते । असुं ये प्राणम् अन्वीयुः[7] अवृकाः अनमित्राः । सत्यज्ञाः वा । यज्ञज्ञाः वा । ते नः आगच्छन्तु पितरः ह्वानेषु । माध्यमिकः[8] यमः इति आहुः । तस्मात् माध्यमिकान्[9] पितृन् मन्यन्ते । अङ्गिरसः ( ११ ) व्याख्याताः ( निरु० ३।१७ ) । पितरः ( १२ ) व्याख्याताः ( निरु० ४।२१ ) । भृगवः (१४) व्याख्याताः ( निरु० ३।१७ ) । अथर्वाणः ( १३ ) अथनवन्तः । थर्वतिः चरतिकर्मा । तत्प्रतिषेधः । तेषाम् एषा साधारणा भवति ( महा० १८ ॥ गु० ६ अथवा १८ ) ।

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम (ऋ० सं० १०।१४।६ ) ॥ अङ्गिरसः नः पितरः नवगतयः । नवनीतगतयः वा । अथर्वाणः भृगवः

---

१ 'अस्य' इ. २ 'असस्तना' इ. ३ 'नानारूपाः' इ. ४ 'ते' ई. ५ 'वा' ई. ६ 'सोम्यासः' इ. ७ 'उन्नीयुः' अ. ८ 'माध्यमकः' अ. ९ 'माध्यमकान्' अ.

सोम्याः । सोमसंपादिनः । तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानाम् । अपि च । एषां भद्रे भन्दनीये । भाजनवति वा । कल्याणे मनसि स्याम । इति । माध्यमिकः देवगणः इति नैरुक्ताः । पितरः इति आख्यानम् । अथापि ऋषयः स्तूयन्ते ( महा० १९ ॥ गु० ७ अथवा १९ ) ।

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः । वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ( ऋ० सं० ७।३३।८ )॥ इति यथा । आप्त्याः ( १५ ) आप्नोतेः । तेषाम् एष निपातः भवति ऐन्द्र्याम् ऋचि ( महा० २० ॥ गु० ८ अथवा २० ) ।

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् । आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि ( ऋ० सं० १०।१२०।६ )॥ स्तोतव्यं बहुरूपम् उरुभूतम् ईश्वरतमम् आप्तव्यम् आप्तव्यानाम् । आदृणाति यः शवसा बलेन सप्त दातॄन् इति वा । सप्त दानवान् इति वा । प्रसाक्षते प्रतिमानानि बहूनि । साक्षतिः आप्नोतिकर्मा ( महा० २१ ॥ गु० ९ अथवा २१ द्वितीयः पादः ) ।

अथ अतः मध्यस्थानाः स्त्रियः । तासाम् अदितिः (१६) प्रथमागामिनी भवति । अदितिः व्याख्याता ( निरु० ४।२२ ) । तस्याः एषा भवति ( महा० २२ ॥ गु० १ अथवा २२ ) ।

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि । अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋ० सं० १०।६४।५)॥ दक्षस्य वा अदिते जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि । विवासतिः परिचर्यायाम् । हविष्माँ आविवासति ( ऋ० सं० ११२।९ ) इति । आशास्तेः वा । अतूर्तपन्थाः अत्वरमाणपन्थाः । बहुरथः अर्यमा आदित्यः । अरीन् नियच्छति । सप्तहोता । सप्त अस्मै रश्मयः रसान् आभिसंनामयन्ति । सप्त एनम् ऋषयः स्तुवन्ति इति वा । विषमरूपेषु जन्मसु

१ 'सोम्यासः' इ. २ 'कल्याण्यां मतौ सुमतौ' अ. ३ 'तेषां' इ. ४ 'माध्यमकान्' अ. 'इति यथा' ई. ६ 'इति वा' ई. ७ 'इति' ई. ८ 'कर्मणि व्रते' अ. ९ 'बहु रंहणः' इ.

कर्मसु[1] उदयेषु । आदित्यः दक्षः इति आहुः । आदित्यमध्ये च स्तुतः । अदितिः दाक्षायणी । अदि॑ते॒र्दक्षो॑ अजायत॒ दक्षा॒द्वदि॑ति॒ः परि॑ (ऋ० सं० १०।७२।४) इति । तत् कथम् उपपद्येत । समानजन्मानौ स्याताम् इति । अपि वा । देवधर्मेण इतरेतरजन्मानौ स्याताम्[2] । इतरेतरप्रकृती । अग्निः अपि अदितिः उच्यते । तस्य एषा भवति (महा० २३॥ गु० २ अथवा २३) ।

यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽनागा॒स्त्वम॑दिते स॒र्वता॑ता । यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म (ऋ० सं० १।९४।१५) ॥ यस्मै त्वं सुद्रविणः ददासि[3] अनागास्त्वम् अनपराधत्वम्[4] अदिते सर्वासु कर्मततिषु । आगः आङ्पूर्वात् गमेः । एनः एतेः । किल्बिषं किल्भिदम्[5] । सुकृतकर्मणः भयम् । कीर्तिम् अस्य भिनत्ति इति वा[6] । यं भद्रेण शवसा बलेन चोदयसि । प्रजावता च राधसा धनेन[7] । ते वयम् इह[8] स्याम । इति[9] । सरमा (१७) सरणात् । तस्याः एषा भवति (महा० २४ ॥ गु० ३ अथवा २४) ।

किमि॒च्छन्ती॑ स॒रमा॒ प्रेदमा॑नड् दू॒रे ह्यध्वा॒ जगु॑रिः परा॒चैः । कास्मेहि॑ति॒ः का परि॑तक्म्यासीत्क॒थं र॒साया॑ अत॒रः पयां॑सि (ऋ० सं० १०।१०८।१) ॥ किम् इच्छन्ती सरमा इदं प्रानट्[10] । दूरे हि अध्वा । जगुरिः जङ्गम्यतेः[11] । पराञ्चैः अचितः । का ते अस्मासु अर्थहितिः आसीत् । किं परितकनम् । परितकम्या रात्रिः । परितः एनां तक्म । तक्म इति उष्णनाम । तकते[12] इति सतः । कथं रसायाः अतरः पयांसि इति । रसा नदी । रसतेः[13] शब्दकर्मणः । कथंरसानि तानि उदकानि इति वा । देवशुनी इन्द्रेण प्रहिता पणिभिः असुरैः समूदे इति आख्यानम् । सरस्वती (१८) व्याख्याता (निरु० ९।२६) । तस्याः एषा भवति (महा० २५॥ गु० ४ अथवा २५) ।

पा॒व॒का न॒ः सर॑स्वती॒ वाजे॑भिर्वा॒जिनी॑वती । य॒ज्ञं व॑ष्टु धि॒याव॑सुः

---

१ 'कर्मसु' ई. २ 'स्याताम्' ई, ३ 'ददाशः' अ. ४ 'अनपराधित्वम्' अ. ५ 'किल्भिदम् । कीर्तिं भिनत्ति । यं०' इ. ६ 'इति वा' ई. ७ 'धनेन' आ. ८ 'इह' ई. ९ 'इति' ई. १० 'प्रापत्' अ. ११ 'जङ्गम्यतेः' ई. १२ 'तकतेः गतिकर्मणः कथं०' इ. १३ 'रसतेः शब्दकर्मणः' ई.

( ऋ० सं० १।३।१० ) ॥ पावका नः सरस्वती । अन्नैः अन्नवती । यज्ञं वष्टु । धियावसुः कर्मवसुः । तस्याः एषा अपरा भवति ( महा० २६ ॥ गु० ५ अथवा २६ ) ।

महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ( ऋ० सं० १।३।१२ ) ॥ महत् अर्णः सरस्वती प्रचेतयति । प्रज्ञापयति । केतुना कर्मणा । प्रज्ञया वा । इमानि[1] च सर्वाणि प्रज्ञानानि[2] अभिविराजति । वाक् अर्थेषु विधीयते । तस्मात् माध्यमिकां वाचं मन्यन्ते । वाक् (१९) व्याख्याता ( निरु० २।२३ ) । तस्याः एषा भवति ( महा० २७ ॥ गु० ६ अथवा २७ ) ।

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ( ऋ० सं० ८।१००।१० ) ॥ यत् वाक् वदन्ती अविचेतनानि । अविज्ञातानि । राष्ट्री देवानां निषसाद मन्द्रा[3] । मदना । चतस्रः अनु[4] दिशः ऊर्जं दुदुहे पयांसि । क्व स्वित् अस्याः परमं जगाम । इति[5] । यत् पृथिवीं गच्छति इति वा । यत् आदित्यरश्मयः हरन्ति इति[6] वा । तस्याः एषा अपरा भवति ( महा० २८ ॥ गु० ७ अथवा २८ ) ।

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ( ऋ० सं० ८।१००।११ ) ॥ देवीं वाचम् अजनयन्त देवाः । तां सर्वरूपाः पशवः वदन्ति । व्यक्तवाचः च अव्यक्तवाचः च । सा नः मदना अन्नं च रसं च दुहाना धेनुः वाक् अस्मान् उपैतु सुष्टुता । अनुमतिः राका इति देवपत्न्यौ इति नैरुक्ताः । पौर्णमास्यौ इति याज्ञिकाः । या पूर्वा पौर्णमासी सा अनुमतिः । या उत्तरा सा राका ( मैत्रा० सं० ४।३।५ ॥ ऐ० ब्रा० ३२।९ ) इति विज्ञायते । अनुमतिः (२०) अनुमननात् । तस्याः एषा भवति ( महा० २९ ॥ गु० ८ अथवा २९ ) ।

---

१ 'इमानि च' ई. २ 'भूतानि' अ. ३ 'मन्द्रा' आ. ४ 'दिशः अनुदिशश्च' इ. ५ 'इति' ई. ६ 'इति वा' ई. ७ 'यानि' इ.

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । [1]इषं तोकाय नो दधः प्र ण आयूंषि तारिषः ( काठ० सं० १३।१६ )॥ अनुमन्यस्व अनुमते त्वम् । सुखं[2] च नः कुरु । अन्नं च नः अपत्याय धेहि । प्रवर्धय च नः आयुः[3] । राका (२१) रातेः दानकर्मणः । तस्याः एषा भवति ( महा० ३० ॥ गु० ९ अथवा ३० ) ।

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ( ऋ० सं० २।३२।४ ) ॥ राकाम् अहं [4]सुह्वानां सुष्टुत्या आव्हये । शृणोतु नः सुभगा । बोधतु आत्मना । सीव्यतु अपः । प्रजननकर्म । सूच्या अच्छिद्यमानया । [5]सूची सीव्यतेः । ददातु वीरं शतप्रदम् । उक्थ्यं वक्तव्यप्रशंसम् । सिनीवाली कुहूः इति देवपत्न्यौ इति नैरुक्ताः । अमावास्ये इति याज्ञिकाः । या पूर्वा अमावास्या सा सिनीवाली । या उत्तरा सा कुहूः ( मैत्रा० सं० ४।३।५॥ ऐ० ब्रा० ३२।९ ) इति विज्ञायते । सिनीवाली (२२) । सिनम् अन्नं भवति । सिनाति भूतानि । वालं पर्व । वृणोतेः । तस्मिन् अन्नवती । वालिनी वा । वालेन इव अस्याम् अणुत्वात् चन्द्रमाः सेतर्व्यः[6] भवति इति वा । तस्याः एषा भवति ( महा० ३१ ॥ गु० १० अथवा ३१ ) ।

सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ( ऋ० सं० २।३२।६ ) ॥ सिनीवालि पृथुजघने । [7]स्तुकः स्त्यायतेः । संघातः । पृथुकेशस्तुके[8] । पृथुष्टुते[9] वा । या त्वं देवानाम् असि स्वसा । [10]स्वसा सु असा । स्वेषु सीदति इति वा । जुषस्व हव्यम् आहुतम् । प्रजां च देवि दिश नः । कुहूः (२३) गूहतेः । क्व अभूत् इति वा । क्व सती हूयते इति वा । [11]क्व आहुतं हविः जुहोति इति वा । तस्याः एषा भवति ( महा० ३२ ॥ गु० ११ अथवा ३२ ) ।

---

१ 'क्रत्वे दक्षाय नो हिनु प्र°' अ । ओ. २ 'प्रतीर्णानि कुरु' इ. ३ 'आयूंषि' इ. ४ 'स्वाह्वानां' इ. ५ 'सूची सीव्यतेः' ई. ६ 'सेवितव्यः' ओ. ७ 'स्तुकः स्त्यायतेः । संघातः' ई. ८ '°स्तुका' अ । '°स्तुके वा' इ. ९ 'पृथुस्तुके' ओ । 'पृथुष्टुतिर्वा' अ. १० 'स्वसा° वा' ई. ११ 'क्व°वा' ई.

कुहूमहं सुकृतं[1] विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ( मैत्रा० सं० ४।१२।६ )॥ कुहूम् अहं सुकृतं विदितकर्माणम् अस्मिन् यज्ञे सुह्वानाम्[2] आह्वये[3] । सा नः ददातु श्रवणं पितॄणाम् । पित्र्यं धनम् इति[4] वा । पित्र्यं यशः इति[5] वा । तस्यै ते देवि हविषा विधेम इति व्याख्यातम् । यमी (२४) व्याख्याता ( निरु० १०।१९ ) । तस्याः एषा भवति ( महा० ३३ ॥ गु० १२ अथवा ३३ ) ।

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ( ऋ० सं० १०।१०।१४ ) ॥ अन्यम् एव हि[6] त्वं यमि[7] । अन्यः त्वां परिष्वङ्क्ष्यते[8] । लिबुजा[9] इव वृक्षम् । तस्य वा त्वं मनः इच्छ । स वा तव । अध अनेन कुरुष्व संविदम् । सुभद्रां कल्याणभद्राम् । यमी यमं चकमे । तां[10] प्रत्याचचक्षे[11] । इति[12] आख्यानम् ( महा० ३४ ॥ गु० १३ अथवा ३४ तृतीयःपाद ) ।

उर्वशी (२५) व्याख्याता ( निरु० ५।१३ ) । तस्याः एषा भवति ( महा० ३५ ॥ गु० १ अथवा ३५ ) ।

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः (ऋ० सं० १०।९५।१०) ॥ विद्युत् इव या पतन्ती अद्योतत हरन्ती मे अप्या काम्यानि । उदकानि अन्तरिक्षलोकस्य । यदा । नूनम् अयं[13] जायेत अद्भ्यः[14] अध्यपः इति[15] । नर्यः मनुष्यैः[16] नृभ्यः हितः । नरापत्यम् इति वा । सुजातः सुजाततरः । अथ उर्वशी प्रवर्धयते दीर्घम् आयुः । पृथिवी (२६) व्याख्याता ( निरु० १।१३ ) । तस्याः एषा भवति ( महा० ३६ ॥ गु० २ अथवा ३६ ) ।

बळित्था[17] पर्वतानां खिद्रं बिभर्षि पृथिवि । प्र या भूमिं प्रवत्वति

१ 'सुवृतं' ओ. २ 'स्वाह्वानाम्' इ. ३ 'आह्वयामि' इ. ४ 'इति' ई. ५ 'इति व्याख्यातम्' ई. ६ 'हि' ई. ७ 'यमि लिबुजा इव वृक्षम्' इ. ८ 'परिष्वजताम्' इ. ९ 'लिबुजा इव वृक्षम्' ई' १० 'यमः ता' इ. ११ 'प्रत्याचचक्षे' इ. १२ 'इति आख्यानम्' ई. १३ 'अयं' ई. १४ 'अद्भ्यः' ई. १५ 'इति' ई. १६ 'मनुष्यः' ई. १७ 'बालित्था' अ.

मह्ना जिनोषि महिनि ( ऋ० सं० ५।८४।१ )॥ सत्यं त्वं पर्वतानां मेघानां खेदनम् । छेदनम्[1] । बलम् अमुत्र धारयसि पृथिवि । प्रजिन्वसि या भूमिम् । प्रवणवति । महत्त्वेन । महति इति । उदकवति इति वा । इन्द्राणी (२७) इन्द्रस्य पत्नी । तस्याः एषा भवति ( महा० ३७ ॥ गु० ३ अथवा ३७ )।

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् । नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।११ )॥ इन्द्राणीम् आसु नारिषु[2] सुभगान् अहम् अशृणवम् । न हि अस्याः अपराम् अपि समां जरया म्रियते पतिः । सर्वस्मात् यः इन्द्रः उत्तरः तम् एतत्[3] ब्रूमः । तस्याः एषा अपरा भवति ( महा० ३८ ॥ गु० ४ अथवा ३८ )।

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः प्रियं १
देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।१२ )॥ न अहम् इन्द्राणि रमे सख्युः वृषाकपेः ऋते । यस्य इदम् अप्यं हविः । अप्सु शृतम् । अद्भिः संस्कृतम् इति वा । प्रियं देवेषु निगच्छति । सर्वस्मात् यः इन्द्रः उत्तरः तम्[4] एतत् ब्रूमः । गौरीः (२८) रोचतेः ज्वलतिकर्मणः । अयम्
अपि इतरः गौरः वर्णः एतस्मात् एव । प्रशस्यः भवति । तस्याः एषा भवति १
( महा० ३९ ॥ गु० ५ अथवा ३९ )।

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ( ऋ० सं० १। १६४।४१ )॥ गौरीः निर्मिमाय । सलिलानि तक्षती कुर्वती । एकपदी मध्यमेन । द्विपदी मध्यमेन च आदित्येन च । चतुष्पदी दिग्भिः । अष्टापदी
दिग्भिः च अवान्तरदिग्भिः च । नवपदी दिग्भिः च अवान्तरदिग्भिः च आदि- २
त्येन च । सहस्राक्षरा बहूदका । परमे व्यवने । तस्याः एषा अपरा भवति ( महा० ४० ॥ गु० ६ अथवा ४० )।

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।

---

१ 'छेदनं भेदनं' ओ. २ 'नारीषु' केषुचित् निरुक्तपुस्तकेषु. ३ 'एतत्' ई. ४ 'तम् एतत् ब्रूमः' ई.

ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ( ऋ० सं० १।१६४।४२ )॥ तस्याः समुद्राः अधिविक्षरन्ति। वर्षन्ति मेघाः। तेन जीवन्ति दिगाश्रयाणि भूतानि। ततः क्षरति अक्षरम् उदकम्[1]। तत्[2] सर्वाणि भूतानि उपजीवन्ति। गौः (२९) व्याख्याता ( निरु० २।५ )। तस्याः एषा भवति ( महा० ४१ ॥ गु० ७ अथवा ४१ )।

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ। सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ( ऋ० सं० १।१६४।२८ )॥ गौः अन्वमीमेत् वत्सं नि[3]मिषन्तम्। अनिमिषन्तम् आदित्यम् इति[4] वा। मूर्धानम् अस्य अभिहिङ्ङकरोत् मननाय[5]। सृक्वाणं सरणम्। घर्मं हरणम्। अभिवावशाना मिमाति मायुम्। प्रप्यायते पयोभिः। मायुम् इव आदित्यम् इति वा[6]। वाक् एषा[7] माध्यमिका। घर्मधुक् इति[8] याज्ञिकाः। धेनुः (३०) धयतेः वा। धिनोतेः वा। तस्याः एषा भवति ( महा० ४२ ॥ गु० ८ अथवा ४२ )।

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम्। श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ( ऋ० सं० १।१६४।२६ )॥ उपह्वये सुदोहनां[9] धेनुम् एताम्। कल्याणहस्तः गोधुक् अपि च दोग्धु[10] एनाम्। श्रेष्ठं सवं सविता सुनोतु नः[11]। इति। एष हि श्रेष्ठः सर्वेषां सवानां यत् उदकम्। यद्वा। पयः यजुष्मत्। अभीद्धः घर्मः। तं सुप्रब्रवीमि[12]। वाक् एषा माध्यमिका। घर्मधुक् इति याज्ञिकाः। अघ्न्या (३१) अहन्तव्या भवति। अघघ्नी इति वा। तस्याः एषा भवति ( महा० ४३ ॥ गु० ९ अथवा ४३ )।

सुयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ( ऋ० सं० १।१६४।

१ 'उदकम्। उदकम् अक्षरम्। अभिव्यञ्जयत् क्षराति' इ. २ 'विश्वम् उपजीवति। गौः°' इ. ३ 'नि' ई. ४ 'इति वा' ई. ५ 'मननाय' ई. ६ 'मायुम्° वा' ई. ७ 'एषा' ई. ८ 'इति याज्ञिकाः' ई. ९ 'सुदुघां' अ। 'सुदोहां' इ. १० 'दोग्धि' ओ। 'दोग्धेनां' अ. ११ 'नः°उदकम्' ई. १२ 'सुष्टु प्रब्रूमः' इ.

४० ) ॥ सुयवसादिनी भगवती हि भव । अथ इदानीं वयं भगवन्तः स्याम । अद्धि तृणम् अघ्न्ये सर्वदा । पिब च शुद्धम् उदकम् आचरन्ती । तस्याः एषा अपरा भवति ( महा० ४४ ॥ गु० १० अथवा ४४ ) ।

हिंकृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ( ऋ० सं० १।१६४।२७ ) ॥ इति सा निगदव्याख्याता । पथ्या (३२) स्वस्तिः (३३) । पन्थाः अन्तरिक्षम् । तन्निवासात् । तस्याः एषा भवति ( महा० ४५ ॥ गु० ११ अथवा ४५ ) ।

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति । सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा (ऋ० सं० १०।६३।१६) ॥ स्वस्तिः एव हि प्रपथे श्रेष्ठा । रेक्णस्वती धनवती । अभ्येति या वसूनि वननीयानि । सा नः अमा गृहे । सा निरमणे । सा निर्गमने । पातु । स्वावेशा भवतु । देवी गोप्त्री । देवान् गोपायतु इति । देवाः एनां गोपायन्तु इति वा । उषाः (३४) व्याख्याता ( निरु० २।१८ ) । तस्याः एषा भवति ( महा० ४६ ॥ गु० १२ अथवा ४६ ) ।

अपोषा अनसः सरत्संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ( ऋ० सं० ४।३०।१० ) ॥ अपासरत् उषाः अनसः संपिष्टात् मेघात् बिभ्युषी । अनः वायुः । अनितेः । अपि वा । उपमार्थे स्यात् । अनसः इव । शकटात् इव । अनः शकटम् । आनद्धम् अस्मिन् चीवरम् । अनितेः वा स्यात् जीवनकर्मणः । उपजीवन्ति एनत् । मेघः अपि अनः एतस्मादेव । यत् निरशिश्नथत् वृषा । वर्षिता मध्यमः । तस्याः एषा अपरा भवति ( महा० ४७ ॥ गु० १३ अथवा ४७ ) ।

एतदस्या अनः शये सुसंपिष्टं विपाश्या । ससार सीं परावतः ( ऋ० सं० ४।३०।११ ) ॥ एतत् अस्याः अनः आशेते सुसंपिष्टम् इतरत्

---

१ 'सुयवसादिनी' ई. २ 'हि' ई. ३ 'इति.° व्याख्याता' ई. ४ 'स्वस्तिः व्याख्याता । तस्याः' इ. ५ 'वसूनि' ई. ६ 'अरणे अरण्ये च निर्गमने च' इ. ७ 'बिभ्यती' इ. ८ 'इव० एतस्मादेव' ई. ९ 'वायुः' इ.

इव । विपाशि विमुक्तपाशि । ससार उषाः परावतः । प्रेरितवतः[1] । परागतात् वा । इळा[2] (३५) व्याख्याता ( निरु० ८।७ ) । तस्याः एषा भवति ( महा० ४८॥ गु० १४ अथवा ४८ ) ।

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु । उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ( ऋ० सं० ५।४१।१९ )॥ सिषक्तु न ऊर्जव्यस्य पुष्टेः ( ऋ० सं० ५।४१।२० ) । अभिगृणातु नः इळा । यूथस्य माता[3] । स्मत्[4] अभि नदीभिः उर्वशी वा गृणातु । उर्वशी वा[5] । बृहत् दिवा । महत् दिवा । गृणाना[6] । अभ्यूर्ण्वाना । प्रभृथस्य[7] प्रभृतस्य । आयोः अयनस्य[8] । ज्योतिषः[9] वा । उदकस्य वा[10] । सेवतां नः अन्नस्य पुष्टेः । रोदसी ( ३६ ) रुद्रस्य पत्नी । तस्याः एषा भवति ( महा० ४९ ॥ गु० १५ अथवा ४९ ) ।

रथं नु मारुतं वयं श्रवस्युमा हुवामहे । आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ( ऋ० सं० ५।५६।८ )॥ रथं क्षिप्रं मारुतं[11] वयं श्रवणीयम् आह्वयामहे । आ यस्मिन् तस्थौ सुरमणीयानि उदकानि बिभ्रती सचा मरुद्भिः सह रोदसी रोदसी ( महा० ५० ॥ गु० १६ अथवा ५० चतुर्थः पादः ) ।

एकादशोऽध्यायः समाप्तः

---

१ 'प्रेरितवतः । परागतात् वा' ई. २ 'इला' अ. ३ 'माता सर्वस्य माता' ओ. ४ 'स्मत्' ई. ५ 'उर्वशी वा उर्वशी इव' इ. ६ 'गृणातु' इ. ७ 'प्रभृथस्य' ई. ८ 'अयनस्य मनुष्यस्य' ओ. ९ 'ज्योतिषः वा' ई. १० 'वा' ई. ११ 'मारुतं मेघं' ओ.

# द्वादशोऽध्यायः

अथ अतः द्युस्थानाः देवताः । तासाम् अश्विनौ ( निघ० ५।६।१ ) प्रथमागामिनौ भवतः । अश्विनौ यत् व्यश्नुवाते सर्वम् । रसेन अन्यः । ज्योतिषा अन्यः । अश्वैः अश्विनौ इति और्णवाभः । तत् कौ अश्विनौ । द्यावापृथिव्यौ इति एके । अहोरात्रौ इति एके । सूर्याचन्द्रमसौ इति एके । राजानौ पुण्यकृतौ इति ऐतिहासिकाः । तयोः कालः ऊर्ध्वम् अर्धरात्रात् । प्रकाशीभावस्य अनुविष्टम्भम् [1]अनु । तमोभागः हि मध्यमः । ज्योतिर्भागः आदित्यः । तयोः एषा भवति (१) ।

वसातिषु स्म चरथोऽसितौ पेत्वाविव । कदेदश्विना युवमभि देवाँ अगच्छतम् ॥ [2]इति सा निगदव्याख्याता । [3]तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोः असंस्तवेन एषः अर्धर्चः भवति । वासात्यो अन्य उच्यत उषः पुत्रस्तवान्यः । इति । तयोः एषा अपरा भवति ( २ ) ।

इहेह जाता समवावशीतामरेपसा तन्वा३नामभिः स्वैः । जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ( ऋ० सं० १८१।४ ) ॥ इह च इह च जातौ संस्तूयेते[4] । पापेन[5] अलिप्यमानया तन्वा । नामभिः च[6] स्वैः । जिष्णुः वाम् अन्यः सुमहतः बलस्य ईरयिता मध्यमः । दिवः अन्यः सुभगः पुत्रः उह्यते[7] आदित्यः । तयोः एषा अपरा भवति (३) ।

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ( ऋ० सं० १।२२।१ ) ॥ प्रातर्योगिनौ विबोधय अश्विनौ । इह आगच्छताम् अस्य सोमस्य पानाय । तयोः एषा अपरा भवति ( ४ ) ।

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् । उतान्यो

---

१ 'अनु' ई. २ 'इति०व्याख्याता' ई. ३ 'वसातिपु स्म चरथो वसातयो रातयो वसन्तेस्मा इतरेतरा तयोर्वक्तेर्वा वहतेर्वासितौ पेत्वाविव । अपेत्वा वृत्रहणं सुरातयोस्तयोः°' ओ. ४ 'संस्तूयेथे' इ. ५ 'आपापया तन्वा' इ. ६ 'च' ई. ७ 'ऊह्यते' ओ.

अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयान् ( ऋ० सं० ५।७७।२ )॥ प्रातः यजध्वम् अश्विनौ । प्रहिणुत । न सायम् अस्ति देवेज्या । अजुष्टम् एतत्[1] । अपि अन्यः अस्मत् यजते । वि च आवः । पूर्वः पूर्वः यजमानः वनीयान् । वनयितृतमः । तयोः कालः सूर्योदयपर्यन्तः । तस्मिन् अन्याः देवताः ओप्यन्ते[2] । उषाः ( २ ) वष्टेः कान्तिकर्मणः । उच्छतेः इतरा माध्यमिका । तस्याः एषा भवति ( ५ ) ।

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ( ऋ० सं० १।९२।१३ )॥ उषः तत् चित्रं[3] चायनीयं[4] धनम् आहर अस्मभ्यम्[5] अन्नवति[6] । येन पुत्रान् च पौत्रान् च दधीमहि । तस्याः एषा अपरा भवति ( ६ ) ।

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते । निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ( ऋ० सं० १।९२।१ )॥ एताः ताः उषसः केतुम् अकृषत । प्रज्ञानम् । एकस्याः एव पूजनार्थे बहुवचनं स्यात् । पूर्वे अर्धे अन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निः इति एष सम् इति एतस्य स्थाने । एमीदेषां निष्कृतं जारिणीव (ऋ० सं० १०।३४।५) इत्यपि निगमः भवति । प्रतियन्ति गावः गमनात्[7] । अरुषीः आरोचनात्[8] । मातरः भासः[9] निर्मात्र्यः । सूर्या ( ३ ) सूर्यस्य पत्नी । एषा एव अभिसृष्टकालतमा । तस्याः एषा भवति ( ७ ) ।

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व (ऋ० सं० १०।८५।२०)॥ सुकाशनं शल्मलं सर्वरूपम् । अपि वा । उपमार्थे स्यात् । सुकिंशुकम् इव शल्मलिम् इति । किंशुकं क्रंशतेः प्रकाशयतिकर्मणः । शल्मलिः सुशरः भवति । शरवान् वा । आरोह सूर्ये अमृतस्य लोकम् । उदकस्य । सुखं पत्ये वहतुं

---

१ 'तत्' इ. २ 'उप्यन्ते' अ. ३ 'चित्रं' आ. ४ चायनीयं मंहनीयं धनं' ओ. ५ 'अस्माकं' ई. ६ 'अन्नवति' ई. ७ 'गमनात्' ई. ८ आरोचनात्' ई. ९ 'भासःनिर्मात्र्यः' ई.

कुरुष्व । सविता सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा इति च ब्राह्मणम् । वृषाकपायी (४) वृषाकपेः पत्नी । एषा एव अभिसृष्टकालतमा । तस्याः एषा भवति (८) ।

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे । घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः (ऋ० सं० १०।८६।१३) ॥ वृषाकपायि रेवति । सुपुत्रे मध्यमेन । सुस्नुषे माध्यमिकया वाचा । स्नुषा साधुसादिनी इति वा । साधुसानिनी इति वा । सु अपत्यम् । तत् सनोति इति वा । प्राश्नातु ते इन्द्रः उक्षणः । एतान् माध्यमिकान् संस्त्यायान् । उक्षणः उक्षतेः वृद्धिकर्मणः । उक्षन्ति[1] उदकेन इति वा । प्रियं कुरुष्व सुखाचयकरं [2]हविः । सर्वस्मात् यः इन्द्रः उत्तरः [3]तम् एतत् ब्रूमः आदित्यम् । सरण्यूः (५) सरणात् । तस्याः एषा भवति (९) ।

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते । उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः (ऋ० सं० १०।१७।२) ॥ [4]अपागूहन् अमृतां मर्त्येभ्यः । कृत्वी[5] सवर्णाम् अददुः विवस्वते । [6]अपि अश्विनौ अभरत् । यत् तत् आसीत् । अजहात् द्वौ मिथुनौ सरण्यूः । मध्यमं च माध्यमिकां च वाचम् इति नैरुक्ताः । यमं च यमीं च इति ऐतिहासिकाः । तत्र इतिहासम् आचक्षते । [7]त्वाष्ट्री सरण्यूः विवस्वतः आदित्यात् यमौ मिथुनौ जनयांचकार । सा सवर्णास् अन्यां प्रतिनिधाय आश्वं रूपं कृत्वा प्रदुद्राव । स विवस्वान् आदित्यः आश्वम् एव रूपं कृत्वा ताम् अनुसृत्य संबभूव । ततः अश्विनौ जज्ञाते । सवर्णायां मनुः । तदभिवादिनी एषा ऋक् भवति (१०) ।

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति । यमस्य माता [8]पर्युह्यमाना महो जाया विवस्वतो ननाश (ऋ० सं० १०।१७।१) ॥ त्वष्टा दुहितुः वहनं करोति । इमानि च सर्वाणि भूतानि अभिसमागच्छन्ति ।

१ 'उक्षतेः वा सिञ्चनकर्मणः' इ. २ 'हविः सुखकरं हविः' ओ. ३ तम् एतत् ब्रूमः' ई. ४ 'अभ्यगूहन्' ओ. ५ 'कृत्वा' इ. ६ 'अपि' ई. ७ 'त्वाष्ट्री०सवर्णायां मनुः' ई. ८ इतीदं विश्वं भुवनं समेति । इमानि° ओ । 'इमानि च' ई.

यमस्य माता पर्युह्यमाना महतः जाया विवस्वतः ननाश । रात्रिः आदित्यस्य । आदित्योदये अन्तर्धीयते ( महा० ११ ॥ गु० ११ प्रथमः पादः ) ।

सविता (७) व्याख्यातः ( निरु० ७।३१ ॥ १०।३१ ) । तस्य कालः यदा द्यौः अपहततमस्का आकीर्णरश्मिः भवति । तस्य एषा भवति ( महा० १२ ॥ गु० १ अथवा १२ ) ।

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे । वि नाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ( ऋ० सं० ५।८१।२ ) ॥ सर्वाणि प्रज्ञानानि[1] प्रतिमुञ्चते मेधावी[2] । कविः क्रान्तदर्शनः भवति[3] । कवतेः[4] वा । प्रसुवति भद्रं द्विपाद्भ्यः च चतुष्पाद्भ्यः च । व्यचिख्यपत्[5] नाकं सविता[6] वरणीयः । प्रयाणम् अनु उषसः विराजति । अधोरामः[7] सावित्रः ( काठक सं० ५।८।१ ॥ तै० सं० ५।५।२२ ॥ वाज० सं० २९।५८ ) इति पशुसमाम्नाये विज्ञायते । कस्मात् सामान्यात् इति । अधस्तात् तद्वेलायां तमः भवति । एतस्मात् सामान्यात् । अधस्तात्[8] रामः अधस्तात् कृष्णः । कस्मात् सामान्यात् इति[9] । अग्निं चित्वा न रामामुपेयात् ( काठकसं० २१।७ ) । रामा रमणाय उपेयते न धर्माय ( वासिष्ठधर्मशास्त्रं १८।१६ ) । कृष्णजातीया । एतस्मात् सामान्यात् । कृकवाकुः सावित्रः ( मैत्रा० सं० ३। १४।१५ ॥ काठकसं० ५।७।८ ) इति पशुसमाम्नाये विज्ञायते । कस्मात् सामान्यात् इति । कालानुवादं परीत्य । कृकवाकोः पूर्वं शब्दानुकरणम् । वचेः उत्तरम् । भगः ( ८ ) व्याख्यातः ( निरु० ३।१६ ) । तस्य कालः प्राक् उत्सर्पणात् । तस्य एषा भवति ( महा० १३ ॥ गु० २ अथवा १३ ) ।

प्रा॒त॒र्जितं॒ भग॑मु॒ग्रं हु॑वेम व॒यं पु॒त्रमदि॑ते॒र्यो वि॑ध॒र्ता । आ॒ध्रश्चि॒द्यं मन्य॑मानस्तु॒रश्चि॒द्राजा॑ चि॒द्यं भगं॑ भ॒क्षीत्याह॑ ( ऋ० सं० ७।४१।२ ) ॥ प्रातर्जितं भगम् उग्रं[10] ह्वयेम वयं पुत्रम् अदितेः । यः विधारयिता सर्वस्य ।

१ 'प्रज्ञानानि' ई. २ 'मेधावी' ई. ३ 'भवति' ई. ४ 'कवतेः वा गतिकर्मणः' इ. ५ 'व्यख्यत्' अथवा 'व्यख्यपत्' अ. ६ 'सविता वरणीयः' ई. ७ 'अधोरामः अधस्तात् कृष्णः' ई. ८ 'कृष्णः रामः कस्मात्' इ. ९ 'इति' ई. १० 'उग्रम् उद्गूर्णम् आह्वयामहे' इ.

आध्रः चित् यं मन्यमानः । आढ्यालुः दरिद्रः । तुरः चित् । तुरः[1] इति यमनाम । तरतेः वा । त्वरतेः वा । त्वरया तूर्णगतिः यमः । राजा चित् । यं[2] भगं भक्षि इति आह । अन्धोभगः ( कौषी० ब्रा० ६।१३ ॥ शत० ब्रा० १।७।४।६ ) इति आहुः । अनुत्सृप्तः न दृश्यते । प्राशित्रम् अस्य अक्षिणी निर्जघान ( कौषी० ब्रा० ६।१३ ) इति च ब्राह्मणम् । जनं भगो गच्छति ( मैत्रा० सं० १।६।१२ ) इति वा[3] । जनं गच्छति आदित्यः उदयेन । सूर्यः ( ९ ) सर्तेः वा । सुवतेः वा । स्वीर्यतेः वा । तस्य एषा भवति ( महा० १४ ॥ गु० ३ अथवा १४ ) ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ( ऋ० सं० १।५०।१ ) ॥ उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यम् । इति । तस्य एषा अपरा भवति ( महा० १५ ॥ गु० ४ अथवा १५ ) ।

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ( ऋ० सं० १।११५।१ ) ॥ चायनीयं देवानाम् उदगमत्[4] अनीकम् । ख्यानं मित्रस्य वरुणस्य अग्नेः च । आपूपुरत् द्यावापृथिव्यौ च अन्तरिक्षं च महत्त्वेन[5] । सूर्यः आत्मा जंगमस्य च स्थावरस्य च । अथ यत् रश्मिपोषं पुष्यति तत् पूषा ( १० ) भवति । तस्य एषा भवति ( महा० १६ ॥ गु० ५ अथवा १६ ) ।

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु (ऋ० सं० ६।५८।१) ॥ शुक्रं ते अन्यत् । लोहितं ते अन्यत् । यजतं ते अन्यत् । यज्ञियं ते अन्यत् । विषमरूपे[6] ते अहनी कर्म । द्यौः इव च[7] असि । सर्वाणि[8] प्रज्ञानानि

---

१ 'तुरः अपि यमः तूर्णगतिः । राजा°' इ. २ 'वा' ई. । 'वा विज्ञायते' अ. ३ 'इति । कमन्यमादित्यादेवमवक्ष्यत् तस्य°' ओ. ४ 'उदगात्' इ. ५ 'महत्त्वेन तेन' ओ. ६ 'विपुरूपे' इ. ७ 'च' ई. ८ 'सर्वाः प्रज्ञाः' इ.

अवसि अन्नवन्[1]। भाजनवती[2] ते पूषन् इह दत्तिः[3] अस्तु । तस्य एषा अपरा भवति ( महा० १७ ॥ गु० ६ अथवा १७ ) ।

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम्[4] । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ( ऋ० सं० ६।४९।८ ) ॥ पथस्पथः अधिपतिं वचनेन कामेन कृतः अभ्यानट् अर्कम् । अभ्यापन्नः[5] अर्कम् इति वा । स नः ददातु चायनीयाग्राणि धनानि । कर्म कर्म च[6] नः प्रसाधयतु पूषा । इति[7] । अथ यत् विषितः भवति तत् विष्णुः ( ११ ) भवति । विशतेः वा । व्यश्नोतेः वा । तस्य एषा भवति ( महा० १८ ॥ गु० ७ अथवा १८ ) ।

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूहळ्मस्य[8] पांसुरे ( ऋ० सं० १।२२।१७ ) ॥ यत् इदं किंच[9] तत् विक्रमते विष्णुः । त्रिधा[10] निधत्ते पदम्[11] । पृथिव्याम् अन्तरिक्षे दिवि इति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसि इति और्णवाभः । समूहळ्म् अस्य प्यायने[12] अन्तरिक्षे पदं न दृश्यते । अपि वा । उपमार्थे स्यात् । समूहळ्म्[13] अस्य पांसुले इव[14] पदं न दृश्यते । इति । पांसवः[15] पादैः सूयन्ते इति वा । पन्नाः शेरते इति वा । पिंशनीयाः[16] भवन्ति इति वा ( महा० १९ ॥ गु० ८ अथवा १९ द्वितीयः पादः ) ।

विश्वानरः ( १२ ) व्याख्यातः ( निरु० ७।२१ ) । तस्य एष निपातः भवति ऐन्द्र्याम् ऋचि ( महा० २० ॥ गु० ९ अथवा २० ) ।

विश्वानरस्य वस्पतिमनानतस्य शवसः । एवैश्च चर्षणीनामूती हुवे रथानाम् ( ऋ० सं० ८।६८।४ ) ॥ विश्वानरस्य आदित्यस्य । अनानतस्य शवसः । महतः[17] बलस्य । एवैः च कामैः । अयनैः । अवनैः वा[18] । चर्षणीनां

१ 'अन्नवन्' ई. २ 'भन्दनीया' इ. ३ 'दानं' इ. ४ 'अभ्यानलर्कम्' अ. ५ 'अभ्यापन्नः अर्कम् इति वा' ई. ६ 'च' ई. ७ 'इति' ई. ८ 'समूळ्हमस्य' अ. ९ 'किंचित्' इ. १० 'त्रेधा' इ. ११ 'पदं त्रेधाभावाय' ओ. १२ 'पांसुरे प्यायने' ओ. १३ 'समूळ्हम्' अ। 'समूहळम् इव' इ. १४ 'इव' ई. १५ 'पांसवः कस्मात् । पादैः' इ. १६ 'पंसनीयाः' ओ. १७ 'महतः' ई. १८ 'वा' ई.

मनुष्याणाम् । ऊत्या च पथा रथानाम्[1] । इन्द्रम् अस्मिन् यज्ञे ह्वयामि । वरुणः ( १३ ) व्याख्यातः ( निरु० १०।३ ) । तस्य एषा भवति ( महा० २१ ॥ गु० २ अथवा २१ ) ।

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १।५०।६ ) ॥ भुरण्युः ( निघ० २।१५।१४ ) इति क्षिप्रनाम । भुरण्युः शकुनिः । भूरिम्[2] अध्वानं नयति । स्वर्गस्य लोकस्य अपि वोह्ळा[3] । तत्संपाती भुरण्युः । अनेन[4] पावक ख्यानेन । भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि तत् ते वयं स्तुमः इति वाक्यशेषः । अपि वा उत्तरस्याम्[5] ( महा० २२ ॥ गु० ३ अथवा २२ ) ।

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १।५०।६ ) ॥ वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः । पश्यन् जन्मानि सूर्य ( ऋ० सं० १।५०।७ ) ॥ व्येषि द्यां रजश्च पृथु । महान्तं लोकम् । अहानि च मिमानः अक्तुभिः रात्रिभिः सह । पश्यन् जन्मानि जातानि सूर्य । अपि वा पूर्वस्याम् ( महा० २३ ॥ गु० ४ अथवा २३ ) ।

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १।५०।६ ) ॥ प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्[6] । प्रत्यङ् विश्वं स्वर्दृशे ( ऋ० सं० १।५०।५ ) ॥ प्रत्यङ् इदं सर्वम् उदेषि[7] । प्रत्यङ् इदं सर्वम्[8] अभिविपश्यसि । इति[9] । अपि वा एतस्याम् एव ( महा० २४ ॥ गु० ५ अथवा २४ ) ।

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ( ऋ० सं० १।५०।६ ) ॥ तेन नः जनान् अभिविपश्यसि । केशी (१४) ।

---

१ 'रथानाम्' ई. २ 'भूरिम्०वोह्ळा' ई. ३ 'वोह्ला' अ. ४ 'येन' इ. ५ 'उत्तरस्यामन्वयस्तेन व्येपि' सायणस्वीकृतनिरुक्तमूले. ६ 'प्रत्यङ् देवानां विशः प्रत्यङ् उदेपि मानुपान् प्रत्यङ्' इ. ७ 'प्रत्यङ् इदं ज्योतिः उच्यते प्रत्यङ्' ओ. ८ 'सर्वम् इदम्' इ. ९ 'इति' ई.

केशाः रश्मयः । तैः तद्वान् भवति । काशनात्[1] वा । तस्य एषा भवति (महा० २५ ॥ गु० ६ अथवा २५ ) ।

केश्य[1] ग्निं केशी विषं केशी बिभर्ति रोदसी । केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ( ऋ० सं० १०।१३६।१ ) ॥ केशी अग्निं च[2] विषं च । विषम् (निघ० १।१२।१५) इति उदकनाम । विष्णातेः । विपूर्वस्य स्नातेः शुध्यर्थस्य[3] । विपूर्वस्य वा सचतेः । द्यावापृथिव्यौ[4] च धारयति । केशी इदं[5] सर्वम् इदम् अभिविपश्यति । केशी इदं ज्योतिः उच्यते । इति आदित्यम् आह । अथापि एते इतरे ज्योतिषी केशिनी (१५) उच्येते । धूमेन अग्निः । रजसा च मध्यमः । तयोः[6] एषा साधारणा[7] भवति ( महा० २६ ॥ गु० ७ अथवा २६ ) ।

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् । विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ( ऋ० सं० १।१६४।४४) ॥ त्रयः केशिनः ऋतुथा विचक्षते । कालेकाले अभिविपश्यन्ति । संवत्सरे वपते एकः एषाम्[8] । इति अग्निः पृथिवीं दहति । सर्वम्[9] एकः अभिविपश्यति कर्मभिः आदित्यः । गतिः एकस्य दृश्यते । न रूपम् । मध्यमस्य । अथ यत् रश्मिभिः अभिप्रकम्पयन् एति तत् वृषाकपिः ( १६ ) भवति । वृषाकम्पनः । तस्य एषा भवति ( महा० २७ ॥ गु० ८ अथवा २७ ) ।

पुनरेहि वृषाकपे सुविता कल्पयावहै । य एष स्वप्नंनशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।२१ ) ॥ पुनः एहि वृषाकपे । सुप्रसूतानि[10] वः कर्माणि कल्पयावहै । यः एष स्वप्ननंशनः । स्वप्नान् नाशयसि[11] आदित्यः[12] उदयेन । सः अस्तम् एषि पथा पुनः । सर्वस्मात् यः इन्द्रः उत्तरः तम्[13] एतत् ब्रूमः आदित्यम् । यमः (१७) व्याख्यातः (निरु० १०।१९) । तस्य एषा भवति (महा० २८ ॥ गु० ९ अथवा २८) ।

---

१ 'काशनाद्वा प्रकाशनाद्वा' ओ. २ 'च' ई. ३ 'विपूर्वस्य स्नातेः शुध्यर्थस्य' आ. ४ 'द्यावापृथिव्यौ' ई. ५ 'इदं' ई. ६ 'तेषां' इ. ओ. ७ 'साधारणा' आ. ८ 'तेषाम्' ई. ९ 'सर्वम्' ई. १० 'सुप्रसूतानि सुप्रवृत्तानि आवां कर्माणि' इ. ११ 'नाशयति' अ. १२ 'आदित्यः' ई. १३ 'तम्° आदित्यम्' ई.

यस्मिन् वृक्षे सुपलाशे देवैः संपिबते यमः । अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ( ऋ० सं० १०।१३५।१ ) ॥ यस्मिन् वृक्षे[1] सुपलाशे स्थाने[2] । वृतः क्षये वा । अपि वा । उपमार्थे स्यात् । वृक्षे इव सुपलाशे इति । वृक्षो[3] व्रश्चनात् । पलाशं पलाशनात् । देवैः संगच्छते यमः । रश्मिभिः आदित्यः । तत्र[4] नः सर्वस्य[5] पाता वा पालयिता वा पुराणान् अनुकामयेत[6] । अजः एकपात् ( १८ ) । अजनः एकः पादः । एकेन पादेन पाति इति वा । एकेन पादेन पिबति इति वा । एकः अस्य पादः इति वा । एकं पादं नोत्खिदति ( अथर्वसं० ११।४।२१ ) इत्यपि निगमः भवति । तस्य एष निपातः भवति वैश्वदेव्याम् ऋचि ( महा० २९ ॥ गु० १० अथवा २९ ) ।

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः । विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरंध्या ( ऋ० सं० १०।६५।१३ ) ॥ पविः ( निघ० २।२०।५ ) शल्यः भवति । यत् विपुनाति कायम् । तद्वत् पवीरम् आयुधम् । तद्वान् इन्द्रः पवीरवान् । अतितस्थौ पवीरवान् ( ऋ० सं० १०।६०।३ ) इत्यपि निगमः भवति । तद्देवतावाक् पावीरवी । पावीरवी च दिव्या वाक् । तन्यतुः तनित्री वाचः अन्यस्याः । अजः च एकपाद् । दिवः धारयिता च[7] सिन्धुः । आपः च समुद्रियाः च[8] । सर्वे[9] च देवाः । सरस्वती च सह[10] पुरन्ध्या । स्तुत्या प्रयुक्तानि । धीभिः कर्मभिः युक्तानि । शृण्वन्तु वचनानि इमानि । इति[11] । पृथिवी ( १९ ) व्याख्याता ( निरु० १।१३ ) । तस्याः एष निपातः भवति ऐन्द्राग्न्याम् ऋचि ( महा० ३० ॥ गु० ११ अथवा ३० ) ।

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः । अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ( ऋ० सं० १।१०८।१० ) ॥ इति[12] सा निगदव्याख्याता । समुद्रः ( २० ) व्याख्यातः ( निरु० २।१० ) ।

---

१ 'वृक्षे । वृश्चतीति वृक्षः' इ. २ 'स्थाने' ई. ३ वृक्षो°पलाशनात्' ई. ४ 'अत्र' इ. ५ 'सर्वस्य°पालयिता' ई. ६ 'इव कामयतु' इ. ७ 'सिन्धुश्च' इ. ८ 'च' ई. ९ 'विश्वे' ई. १० पुरन्ध्या सह । सहधीभिः कर्मभिः शृण्व°' ई. ११ 'इति' ई. १२ 'इति०व्याख्याता' ई.

तस्य एष निपातः भवति पावमान्याम् ऋचि ( महा० ३१ ॥ गु० १२ अथवा ३१ )।

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम्। मुहः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ( ऋ० सं० ९।७३।३ )॥ पवित्रवन्तः रश्मिवन्तः। माध्यमिकाः[1] देवगणाः। पर्यासते माध्यमिकां वाचम्। पिता[2] एषां प्रत्नः पुराणः अभिरक्षति व्रतं कर्म। महः समुद्रं वरुणः तिरः अन्तः[3] दधाति। अथ धीराः शक्नुवन्ति धरुणेषु उदकेषु कर्मणः आरम्भम् आरब्धुम्[4]। अजः एकपाद् ( १८ ) व्याख्यातः ( निरु० १२।२९ )। पृथिवी (१९) व्याख्याता ( निरु० १।१३ )। समुद्रः (२०) व्याख्यातः ( निरु० २।१० )। तेषाम् एष निपातः भवति अपरस्यां बहुदेवतायाम् ऋचि ( महा० ३२ ॥ गु० १३ अथवा ३२ )।

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ( ऋ० सं० ६।५०।१४ )॥ अपि च नः अहिर्बुध्न्यः शृणोतु। अजः च एकपात्। पृथिवी च। समुद्रः च। सर्वे च देवाः। सत्यवृधः वा[5]। यज्ञवृधः वा[6]। हूयमानाः मन्त्रैः स्तुताः मन्त्राः[7] कविशस्ताः अवन्तु। मेधाविशस्ताः। दध्यङ् ( २१ ) प्रत्यक्तः ध्यानम् इति वा। प्रत्यक्तम् अस्मिन् ध्यानम्[8] इति वा। अथर्वा ( २२ ) व्याख्यातः ( निरु० ११।१८ )। मनुः ( २३ ) मननात्। तेषाम् एष निपातः भवति ऐन्द्र्याम् ऋचि ( महा० ३३ ॥ गु० १४ अथवा ३३ )।

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत। तस्मिन् ब्रह्माणि पूर्वथेन्द्रे[10] उक्था समग्मतार्चन्ननु स्वराज्यम् ( ऋ० सं० १।८०।१६ )॥ याम् अथर्वा च मनुः च पिता मानवानां दध्यङ् च धियम् अतनिषत तस्मिन् ब्रह्माणि कर्माणि[9] इन्द्रे उक्थानि च संगच्छन्ताम्[11]। अर्चन् यः अनूपास्ते स्वाराज्यम् ( महा० ३४ ॥ गु० १५ अथवा ३४ तृतीयः पादः )।

---

१ 'माध्यमकाः' अ. २ 'मध्यमः पिता॰' अ. ३ 'अन्तः' ई. ४ 'आरब्धुम्' ई. ५ 'वा' ई. ६ 'उदकवृधो वा' इ. ७ 'मन्त्राः' ई. ८ 'ख्यानम्' अ. ९ 'कर्माणि ब्रह्माणि' अ। 'अन्नानि' ई. १० 'पूर्वेन्द्रे' ओ. ११ 'संगच्छन्तु' अथवा 'समागच्छन्तु' इ.

अथ अतः द्युस्थानाः देवगणाः । तेषाम् आदित्याः (२४) प्रथमागामिनः भवन्ति । आदित्याः व्याख्याताः (निरु० २।१३)। तेषाम् एषा भवति (महा० ३५ ॥ गु० १ अथवा ३५)।

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः (ऋ० सं० २।२७।१)॥ घृतस्नूः घृतप्रस्नाविन्यः । घृतप्रस्नाविण्यः[1] । घृतसानिन्यः[2] । घृतसारिण्यः इति[3] वा । आहुतीः[4] आदित्येभ्यः [5]चिरं जुह्वा जुहोमि । [6]चिरंराजभ्यः इति वा । शृणोतु नः इमाः गिरः मित्रः च[7] अर्यमा च[7] भगः च[7] बहुजातः च[8] धाता दक्षः वरुणः अंशः च । अंशः अंशुना व्याख्यातः (निरु० २।५)। सप्त ऋषयः (२५) व्याख्याताः (निरु० ४।२६ ॥ २।११)। तेषाम् एषा भवति (महा० ३६ ॥ गु० २ अथवा ३६)।

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ (वा० सं० ३४।५५)॥ सप्त ऋषयः प्रतिहिताः शरीरे । रश्मयः आदित्ये[9] । सप्त रक्षन्ति सदम् अप्रमादम् । संवत्सरम्[10] अप्रमाद्यन्तः । सप्त आपनाः ते एव स्वपतः लोकम् अस्तम् इतम् आदित्यं यन्ति । तत्र[11] जागृतः अस्वप्नजौ[12] सत्रसदौ च देवौ । वाय्वादित्यौ । इति अधिदैवतम् । अथ अध्यात्मम् । [13]सप्त ऋषयः प्रतिहिताः शरीरे । [14]षट् इन्द्रियाणि विद्या[15] सप्तमी । आत्मनि । [16]सप्त रक्षन्ति [17]सदम् अप्रमादम् । शरीरम् अप्रमाद्यन्ति । सप्त आपनानि [18]इमानि एव स्वपतः लोकम् अस्तम् इतम् [19]आत्मानं यन्ति । तत्र[11] जागृतः अस्वप्नजौ सत्रसदौ च देवौ । प्राज्ञः च आत्मा तैजसः च । [20]इति आत्मगतिम् आचष्टे । तेषाम् एषा अपरा भवति (महा० ३७ ॥ गु० ३ अथवा ३७)।

---

१ 'घृतप्रस्नाविण्यो वा' इ. २ 'घृतसानिन्यो वा' इ। 'घृतसारिण्यः। घृतसानिन्यः इति°' अ. ३ 'इति' ई. ४ 'गिरः' इ. ५ 'चिरंराजभ्यः । चिरं वा । जुह्वा°' इ. ६ 'चिरंराजभ्य इति वा' ई. ७ 'च' ई. ८ 'च । तुवि इति बहुनाम । धाता°' इ. ९ 'आदित्ये । शृणातेः । श्रयतेर्वा । सप्त°' इ. १० 'आदित्यम्' इ. ११ 'अत्र' अ. १२ 'अस्वप्नजौ०देवौ' ई. १३ 'सप्त०प्रतिहिताः' ई. १४ 'षट्' ई. १५ 'विद्या०आत्मनि' ई. १६ 'सप्त' ई. १७ 'सदम् अप्रमादम्' ई. १८ 'तानि' इ. १९ 'शरीरं' इ. २० 'इति०आचष्टे' ई.

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम्। अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः (अथर्व सं० १०।८।९)॥ तिर्यग्बिलः चमसः ऊर्ध्वबन्धनः। ऊर्ध्वबोधनः वा। यस्मिन् यशः निहितं सर्वरूपम्। अत्र आसते ऋषयः सप्त सह। आदित्यरश्मयः। ये अस्य गोपाः महतः बभूवुः। इति अधिदैवतम्। अथ अध्यात्मम्। तिर्यग्बिलः चमसः ऊर्ध्वबन्धनः। ऊर्ध्वबोधनः[2] वा। यस्मिन् यशः निहितं सर्वरूपम्[1]। अत्र[3] आसते ऋषयः[4] सप्त सह। इन्द्रियाणि[5]। यानि अस्य गोप्तॄणि महतः बभूवुः। इति आत्मगतिम् आचष्टे। देवाः (२६) व्याख्याताः (निरु० ७।१५)। तेषाम् एषा भवति (महा० ३८॥ गु० ४ अथवा ३८)।

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्। देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे (ऋ० सं० १।८९।२)॥ देवानां वयं[6] कल्याण्यां मतौ ऋजुगामिनाम्। ऋतुगामिनाम् इति[7] वा। देवानां दानम्[8] अभि नः निवर्तताम्। देवानां सख्यम् उपसीदेम[9] वयम्। देवाः नः आयुः प्रवर्धयन्तु चिरंजीवनाय। विश्वे देवाः (२७) सर्वे[10] देवाः। तेषाम् एषा भवति (महा० ३९॥ गु० ५ अथवा ३९)।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वांसो दाशुषः सुतम् (ऋ० सं० १।३।७)॥ अवितारः वा। अवनीयाः वा। मनुष्यधृतः सर्वे[11] च देवाः इह[12] आगच्छत[13]। दत्तवन्तः दत्तवतः सुतम्। इति। तत् एतत् एकम् एव[14] वैश्वदेवं गायत्रं तृचं दशतयीषु[15] विद्यते। यत् तु किंचित् बहुदैवतं तत् वैश्वदेवानां स्थाने युज्यते। यत् एव विश्वलिङ्गम् इति शाकपूणिः। अनत्यन्तगतः तु एष उद्देशः भवति। भूतांशः[16] काश्यपः आश्विनम् एकलिङ्गम्। अभितष्टीयं सूक्तम् एकलिङ्गम्। बभ्रुरेकः[17] इति दश द्विपदाः अलिङ्गाः। साध्याः (२८) देवाः

---

१ 'सर्वरूपम्' ई. २ 'ऊर्ध्वबोधनः वा' ई. ३ 'अत्र' ई. ४ 'ऋषयः सप्त' ई. ५ 'इन्द्रियाणि० बभूवुः' ई. ६ 'वयं कल्याण्यां मतौ' ई. ७ 'इति' ई. ८ 'धनलाभः' ड. ९ 'उपसेदिम' ड. १० 'सर्वे देवाः' ई. ११ 'सर्वे च देवाः' ई. १२ 'इह' ई. १३ 'आगत' ड. १४ 'इव' अ. १५ 'दाशतयीषु' ड. १६ 'बभ्रुरेकः इति दश द्विपदाः अलिङ्गाः। भूतांशः' ओ. १७ 'बभ्रुरेकः०अलिङ्गाः ई।' ओ.

साधनात् । तेषाम् एषा भवति ( महा० ४० ॥ गु० ६ अथवा ४० ) ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ( ऋ० सं० १।१६४।५० ॥ १०।९०।१६ ) ॥ यज्ञेन यज्ञम् अयजन्त देवाः । अग्निना अग्निम् अयजन्त देवाः । अग्निः पशुरासीत् । तमालभन्त । तेनायजन्त इति च ब्राह्मणम् । तानि धर्माणि प्रथमानि आसन् । ते ह नाकं महिमानः समसेवन्त यत्र पूर्वे साध्याः सन्ति देवाः । साधनात् । द्युस्थानः देवगणः इति नैरुक्ताः । पूर्वं देवयुगम् इति आख्यानम् । वसवः ( २९ ) यत् विवसते सर्वम् । अग्निः वसुभिः वासवः इति समाख्या । तस्मात् पृथिवीस्थानाः । इन्द्रः वसुभिः वासवः इति समाख्या । तस्मात् मध्यस्थानाः । वसवः आदित्यरश्मयः विवासनात् । तस्मात् द्युस्थानाः । तेषाम् एषा भवति ( महा० ४१॥ गु० ७ अथवा ४१ ) ।

सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः । जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥ स्वागमनानि वः देवाः सुपथानि अकर्म ये आगच्छत सवनानि इमानि जुषाणाः । खादितवन्तः पीतवन्तः च सर्वे अस्मासु धत्त वसवः वसूनि । तेषाम् एषा अपरा भवति ( महा० ४२ ॥ गु० ८ अथवा ४२ ) ।

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ( ऋ० सं० ७।३९।३ ) ॥ ज्मयाः अत्र वसवः अरमन्त देवाः । ज्मा पृथिवी । तस्यां भवाः । उरौ च अन्तरिक्षे । मर्जयन्त गमयन्त रमयन्त । शुभ्राः शोभमानाः । अर्वाचः एनान् पथः बहुजवाः कुरुध्वम् । शृणुत दूतस्य जग्मुषः नः अस्य अग्नेः । वाजिनः ( ३० ) व्याख्याताः ( निरु० २।२८ ) । तेषाम् एषा भवति ( महा० ४३ ॥ गु० ९ अथवा ४३ ) ।

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ( ऋ० सं० ७।३८।७ )॥

---

१ 'यज्ञेन०देवाः' ई. २ 'संसेव्यन्त' अ. ३ 'साधनात्' ई. ४ 'सदनमकर्म' ओ.

सुखाः नः भवन्तु वाजिनः ह्वानेषु देवतातौ यज्ञे । मितद्रवः सुमितद्रवः । स्वर्काः स्वञ्चनाः इति वा । स्वर्चनाः इति वा । स्वर्चिषः इति वा । जम्भयन्तः अहिं च वृकं च रक्षांसि च क्षिप्रम् अस्मत् याव[1]यन्तु अमीवाः । देवाश्वाः इति वा । देवपत्न्यः ( ३१ ) देवानां पत्न्यः । तासाम् एषा भवति ( महा० ४४ ॥ गु० १० अथवा ४४ ) ।

**देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत** ( ऋ० सं० ५।४६।७ ) ॥ देवानां पत्न्यः उशत्यः अवन्तु नः । प्रावन्तु नः तुजये[2] अपत्यजननाय च अन्नसंसननाय च । याः पार्थिवासः याः अपाम् अपि व्रते[3] कर्मणि ताः नः देव्यः सुहवाः शर्म यच्छन्तु शरणम् । तासाम् एषा अपरा भवति ( महा० ४५ ॥ गु० ११ अथवा ४५ ) ।

**उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् । आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम्** ( ऋ० सं० ५।४६।८ ) ॥ अपि च[4] ग्नाः व्यन्तु देवपत्न्यः । इन्द्राणी इन्द्रस्य पत्नी । अग्नायी अग्नेः पत्नी । अश्विनी अश्विनोः पत्नी । राट् राजतेः । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्ताम् । यः ऋतुः कालः जायानां यः ऋतुः कालः जायानाम् (महा० ४६ ॥ गु० १२ अथवा ४६ ) ।

इति द्वादशोऽध्यायः ।

---

१ 'यावयन्' अ. २ 'तुजये' आ. ३ 'कर्मणि व्रते' अ. ४ 'च' आ.

# त्रयोदशोऽध्यायः

अथ इमाः अतिस्तुतयः इति आचक्षते । अपि वा संप्रत्ययः एव स्यात् । माहाभाग्यात् देवतायाः । सः अग्निम् एव प्रथमम् आह । त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः ( ऋ० सं० २।१।१ ) इति यथा एतस्मिन् सूक्ते । नहि त्वदारे निमिषश्चनेशे ( ऋ० सं० २।२८।६ ) इति वरुणस्य । अथ एषा इन्द्रस्य ( १ ) ।

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ( ऋ० सं० ८।७०।५ ) ॥ यदि ते इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युः न त्वा वज्रिन् सहस्रम् अपि सूर्याः न द्यावापृथिव्यौ अपि अभ्यश्नुवीताम् इति । अथ एषा आदित्यस्य ( २ ) ।

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन । क्व१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।२२ ) ॥ यत् उदञ्चः वृषाकपे गृहम् इन्द्र अजगमत क्व स्यः पुल्वघः मृगः क्व सः बह्वादी मृगः । मृगः मार्ष्टेः गतिकर्मणः । कम् अगमत् देशं जनयोपनः । सर्वस्मात् यः इन्द्रः उत्तरः तम् एतत् ब्रूमः आदित्यम् । अथ एषा आदित्यरश्मीनाम् ( ३ ) ।

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत । यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ( ऋ० सं० १०।८६।१ ) ॥ व्यसृक्षत हि प्रसवाय । न च इन्द्रं देवम् अमंसत । यत्र अमाद्यत् वृषाकपिः अर्यः ईश्वरः पुष्टेषु पोषेषु । मत्सखा मम सखा । मदनसखा । ये नः सखायः तैः सह इति वा । सर्वस्मात् यः इन्द्रः उत्तरः तम् एतत् ब्रूमः आदित्यम् । अथ एषा अश्विनोः ( ४ ) ।

---

१ 'वाचः प्रवह्लितेव' इ.

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका । उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु (ऋ० सं० १०।१०६।६) ॥ सृण्या इव इति । द्विविधा सृणिः भवति । भर्ता च हन्ता च । तथा अश्विनौ च अपि भर्तारौ । जर्भरी भर्तारौ इत्यर्थः । तुर्फरीतू हन्तारौ । नैतोशेव तुर्फरी पर्फरीका । नितोशस्य अपत्यं नैतोशम् । नैतोशा इव तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू । उदन्यजा इव इति उदकजे इव रत्ने । सामुद्रे चान्द्रमसे वा । जेमने जयमने जेमना । मदेरू । ता मे जराय्वजरं मरायु । एतत् जरायुजं शरीरं शरदम् अजीर्णम् । अथ एषा सोमस्य (५) ।

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति (ऋ० सं० ९।५८।१) ॥ तरति स पापं सर्वं मन्दी यः स्तौति । धावति गच्छति ऊर्ध्वां गतिम् । धारा सुतस्यान्धसः । धारया अभिषुतस्य अन्धसः । धारया अभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य । अथ एषा यज्ञस्य (६)।

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश (ऋ० सं० ४।५८।३) ॥ चत्वारि शृङ्गा इति वेदाः वै एते उक्ताः । त्रयः अस्य पादाः इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त छन्दांसि । त्रिधा बद्धः त्रेधा बद्धः मन्त्रब्राह्मणकल्पैः । वृषभो रोरवीति । रोरवणम् अस्य सवनक्रमेण ऋग्भिः यजुर्भिः सामभिः । यत् एनम् ऋग्भिः शंसन्ति यजुर्भिः यजन्ति सामभिः स्तुवन्ति । महो देव इति । एष हि महान् देवः यत् यज्ञः । मर्त्याँ आ विवेश इति । एष हि मनुष्यान् आविशति यजनाय । तस्य उत्तरा भूयसे निर्वचनाय (७)।

स्वर्यन्तो नापेक्षन्त आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे (मैत्रा० सं० २।१०।६॥ काठकसं० १८।४॥ २१।९) ॥ स्वर् गच्छन्तः ईजानाः वा न ईक्षन्ते । ते अमुम् एव लोकं

१ पञ्चमषष्ठसप्तमाष्टमाः खण्डाः दुर्गस्वीकृतपाठे न सन्ति.

गतवन्तः[1] ईक्षन्ते[2] इति । आ द्यां रोहन्ति रोदसी । यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसः वितेनिरे इति । अथ एषा वाचः प्रवह्लितेव[3] (८)।

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति (ऋ० सं० १।१६४।४५) ॥ चत्वारि वाचः परिमितानि पदानि । तानि विदुः ब्राह्मणाः ये मेधाविनः । गुहायां त्रीणि निहितानि न अर्थं वेदयन्ते । गुहा[4] गूहतेः । तुरीयं त्वरतेः । कतमानि तानि चत्वारि पदानि । ओंकारः[5] महाव्याहृतयः च इति आर्षम् । नामाख्याते च उपसर्गनिपाताः च इति वैयाकरणाः । मन्त्रः कल्पः ब्राह्मणं चतुर्थी व्यावहारिकी इति याज्ञिकाः । ऋचः यजूंषि सामानि चतुर्थी व्यावहारिकी इति नैरुक्ताः । सर्पाणां वाक् वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकी इति एके । पशुषु तूणवेषु[6] मृगेषु आत्मनि च इति आत्मप्रवादाः । अथापि ब्राह्मणं भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवत् । एषु एव लोकेषु त्रीणि । पशुषु तुरीयम् । या पृथिव्यां सा अग्नौ सा रथन्तरे । या अन्तरिक्षे सा वायौ सा वामदेव्ये । या दिवि सा आदित्ये सा बृहति सा स्तनयित्नौ । अथ पशुषु । ततो या वाक् अत्यरिच्यत तां ब्राह्मणे[7] न्यदधुः[8] । तस्मात् ब्राह्मणाः उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम् (मैत्रा० सं० १।११।५) इति । अथ एषा अक्षरस्य[9] (९)।

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते (ऋ० सं० १।१६४।३९) ॥ ऋचः अक्षरे परमे व्यवने[10] यस्मिन् देवाः अधिनिषण्णाः सर्वे । यः तत् न वेद किं स ऋचा करिष्यति । ये इत् तत् विदुः ते इमे समासते इति विदुषः उपदिशति । कतमत् तत् एतत् अक्षरम् । ओ३म् इति एषा वाक् इति शाकपूणिः । ऋचः[11] च हि अक्षरे परमे व्यवने धीयन्ते । नानादेवतेषु च

---

१ 'गतवन्तमीक्षन्तामिति' ओ. २ 'इच्छन्त' अ. ३ 'प्रवह्लितेव' ओ. ४ 'गुहा गूहतेः' ई. ५ 'ओंकारः° आर्षम्' ई. ६ 'तूणवे' अ. ७ 'ब्राह्मणेषु' ओ. ८ 'अदधुः' ओ. ९ 'अक्षरस्य प्रवह्लितेव' इ. १० 'व्यवने' ई. ११ 'ऋचश्च °ब्राह्मणम्' ई.

# चतुर्दशोऽध्यायः[1]

व्याख्यातं दैवतम् । यज्ञाङ्गं च । अथ अतः ऊर्ध्वमार्गगतिं व्याख्यास्यामः । सूर्य आत्मा ( ऋ० सं० १।११५।१ ) इति उदितस्य हि कर्मद्रष्टा । अथ एतत् अनुप्रवदति[2] । अथ एतं महान्तम् आत्मानम् एष ऋग्गणः प्रवदति[3] । इन्द्रं मित्रं वरुणमग्निमाहुः ( ऋ० सं० १।१६४।४६ ) इति । अथ एष महान् आत्मा आत्मजिज्ञासया आत्मानं प्रोवाच । अग्निरस्मि जन्मना जातवेदाः ( ऋ० सं० ३।२६।७ ) अहमस्मि प्रथमजाः इति एताभ्याम् ( महा० १ ॥ गु० १४ ) ।

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ( ऋ० सं० ३।२६।७ ) ॥ अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य [4]नाम । यो मा ददाति स इदेव मा[5]वदहमन्नमन्नमदन्तमद्मि ( तैत्ति०उप० ३।१०।६) ॥ इति । स ह ज्ञात्वा प्रादुर्बभूव । एवं तं व्याजहार । यं[6] तमात्मानम् अध्यात्म[7]जम् अन्तिकम् अन्यस्मै आ चचक्ष्व इति ( महा० २ ॥ गु० १५ ) ।

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ( ऋ० सं० १।१६४।३१ ॥ १०।१७७।३ ) ॥ आ वरीवर्ति भुवनेषु अन्तः इति । अथ एष महान् आत्मा सत्त्वलक्षणः । तत् परम् । तत् ब्रह्म । तत् सत्यम् । तत् सलिलम् । तत् अव्यक्तम् । तत् अस्पर्शम् । तत् अरूपम् । तत् अरसम् । तत् अगन्धम् । तत् अमृतम् । तत् शुक्लम् । तन्निष्ठः भूतात्मा । सा एषा भूतप्रकृतिः इति एके । तत् क्षेत्रम् । तज्ज्ञानात्[8] क्षेत्रज्ञम् अनुप्राप्य निरात्मकम्[9] ।

---

१ 'चतुर्दशोऽध्यायः' आ । दुर्गवृत्तौ चतुर्दशोऽध्यायो न वर्तते. २ 'अनुप्रवदन्ति' ओ. ३ 'प्रवदन्ति' ओ. ४ 'नाभिः' ओ. ५ 'मा वा अह०' ओ. ६ '०व्याजहारायतमात्मा०' ओ. ७ 'अभ्यात्म०' ओ. ८ 'तदज्ञानात्' ओ. ९ 'निरात्मजम्' ओ.

अथ एष महान् आत्मा त्रिविधः भवति । सत्त्वं रजः तमः इति । सत्त्वं तु मध्ये विशुद्धं तिष्ठति । अभितः रजस्तमसी । [1]रजः इति कामद्वेषः । तमः इति अविज्ञातस्य विशुध्यतः विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते । प्रतिभातिलिङ्गः महान् आत्मा तमोलिङ्गः । विद्याप्रकाशलिङ्गः तमः । अपि निश्चयलिङ्गः आकाशः ( महा० ३ ॥ गु० १६ ) ।

आकाशगुणः शब्दः । आकाशात् वायुः द्विगुणः स्पर्शेन । वायोः ज्योतिः त्रिगुणं रूपेण । ज्योतिषः आपः चतुर्गुणाः रसेन । अद्भ्यः पृथिवी पञ्चगुणा गन्धेन । पृथिव्याः भूतग्रामस्थावरजंगमाः । तत् एतत् अहर्युगसहस्रं जागर्ति । तस्य अन्ते सुषुप्स्यन् अङ्गानि प्रत्याहरति । भूतग्रामाः पृथिवीम् अपियन्ति । पृथिवी अपः । आपः ज्योतिषम् । ज्योतिः वायुम् । वायुः आकाशम् । आकाशः मनः । मनः विद्याम् । विद्या महान्तम् आत्मानम् । महान् आत्मा प्रतिभाम् । प्रतिभा प्रकृतिम् । सा स्वपिति । युगसहस्रं रात्रिः । तौ एतौ अहोरात्रौ अजस्रं परिवर्तेते । स कालः तत् एतत् अहः भवति ।

युगसहस्रपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥

इति ( महा० ४ ॥ गु० १७ ) ।

तं परिवर्तमानम् अन्योऽनुप्रवर्तते । स्रष्टा द्रष्टा विभक्ता अतिमात्रः अहम् इति गम्यते । स मिथ्यादर्शनेदं पावकं महाभूतेषु । चिरेणु आकाशात् वायोः [2]प्राणं चक्षुः च वक्तारं च तेजसः अद्भ्यः स्नेहं पृथिव्याः मूर्तिः । पार्थिवान् तु अष्टौ गुणान् विद्यात् । त्रीन् मातृतः त्रीन् पितृतः । अस्थिस्नायुमज्जानः पितृतः । त्वङ्मांसशोणितानि मातृतः । [3]अन्नं पानम् इति अष्टौ । सः अयं पुरुषः सर्वमयः सर्वज्ञानः अपि क्लृप्तः ( महा० ५ ॥ गु० १८ ) ।

स यदि अनुरुध्यते तत् भवति । यदि धर्मः अनुरुध्यते तत् देवः भवति । यदि ज्ञानम् अनुरुध्यते तत् अमृतः भवति । यदि कामम् अनुरुध्यते संच्यवते । इमां योनिं संदध्यात् । तत् इदम् अत्र मतम् । श्लेष्मा रेतसः संभवति ।

१ '°तमसी इति काम°' ओ. २ 'प्राणः' ओ. ३ 'अन्नपानम्' अ.

श्लेष्मणः रसः । रसात् शोणितम् । शोणितात् मांसम् । मांसात् मेदः । मेदसः स्नावा । स्नाव्नः अस्थीनि । अस्थिभ्यो मज्जा । मज्जातः रेतः । तत् इदं योनौ रेतः सिक्तं पुरुषः संभवति । शुक्रातिरेके पुमान् भवति । शोणितातिरेके स्त्री भवति । द्वाभ्यां समेन नपुंसकः भवति । शुक्रेण[1] भिन्नेन यमः भवति । शुक्रशोणितसंयोगात् मातृपितृसंयोगात् च । तत् कथम् इदं शरीरं परं संयम्यते । सौम्यः भवति । एकरात्रोषितं कललं भवति । पञ्चरात्रात् बुद्बुदाः । सप्तरात्रात् पेशी । द्विसप्तरात्रात्[2] अर्बुदः । पञ्चविंशतिरात्रैः[3] स्वस्थितः घनः भवति । मासमात्रात् कठिनः भवति । द्विमासाभ्यन्तरे शिरः संपद्यते । मासत्रयेण ग्रीवाव्यादेशः । मासचतुष्केण त्वग्व्यादेशः । पञ्चमे मासे नखरोमव्यादेशः । षष्ठे मुखनासिकाक्षिश्रोत्रं च संभवति । सप्तमे चलनसमर्थः भवति । अष्टमे बुध्या अध्यवस्यति । नवमे सर्वाङ्गसंपूर्णः भवति ।

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नानायोनिसहस्राणि मयोषितानि यानि वै ॥
आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अर्वाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
सांख्यं योगं समभ्यस्येत्पुरुषं वा पञ्चविंशकम् ॥ इति । ततः च दशमे मासे प्रजायते । जातः च वायुना स्पृष्टः[4] न स्मरति जन्ममरणे[5] । अन्ते च शुभाशुभं कर्म । एतत् शरीरस्य प्रामाण्यम् ( महा० ६ ॥ गु० १९ ) ।

अष्टोत्तरं संधिशतम् । अष्टाकपालं शिरः संपद्यते । षोडश वपा पलानि । नव स्नायुशतानि । सप्तशतं पुरुषस्य मर्मणाम् । अर्धचतस्रः रोमाणि कोट्यः । हृदयं हि अष्ट कपालानि । द्वादश कपालानि जिह्वा । वृषणौ हि अष्ट सुवर्णौ[6] । तथा उपस्थगुदपायु । एतत् मूत्रपुरीषं कस्मात् । आहारपान[7]सिक्तत्वात् । अनुपचितकर्माणौ अन्योन्यं जायेते इति । तं विद्याकर्मणी सम-

१ 'शुक्रभिन्नेन°' ओ. २ 'द्विःसप्त°' अ. ३ '°रात्रस्व°' अ. ४ 'स्पृष्टस्तन्न स्म°' ओ. ५ '°मरणमन्ते°' ओ. ६ 'सुपर्णौ' ओ. ७ 'आहारापान°' अ.

